A NEW YEAR GIFT

# FOR OUR SUBSCRIBERS

## OF CHANDAMAMA IN 13 LANGUAGES

A gift that will reach your dear one month after month for a whole year!

**Junior CHANDAMAMA**

**WITH SUBSTANTIAL SAVING**




ONLY

**Rs. 100**

as against Rs. 144**

( This offer is for only a limited period )

*Fill up the coupon below*



## GIFT SUBSCRIPTION FOR JUNIOR CHANDAMAMA

☐ I/My child/Ward is a subscriber of Chandamama,

Subscription No. .................... Language ...............

For subscription number, see address label on envelope

I wish to give a one-year GIFT subscription for JUNIOR CHANDAMAMA to :

Name : ........................................................................................................ (child / grown-up)

Home address : ..........................................................................................................

........................................................................................................ PIN CODE : .........................

Please ATTACH the label below on the FIRST COPY. I am enclosing DD / Cheque No. ...........................

on ................................................. Bank for Rs. 100 (add Rs. 50 on outstation cheques) / M.O.

Receipt No. ....................................... issued by ..................................... P. O.

Signature

** THIS OFFER CLOSES ON JANUARY 31, 2005

* All payments in favour of Chandamama India Ltd., 82 Defence Officers Colony, Ekkaduthangal, Chennai - 600097.

This is a GIFT Subscription, with love from

..........................................................................

Town / City ..............................................................



चन्दमामा सम्पुटः - २१ जनवरी - २००५ सञ्चिका - १०



## अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः

















**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १४४/- (बुकपोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*

**चक्रपाणिः, बि.नागिरेड्डिः च**

# नववर्षारम्भावसरे क्रियतां योग्यः सङ्कल्पः

एषु दिनेषु किञ्चन राष्ट्रस्तरीयं सर्वेक्षणं प्रवृत्तम् । ततः प्राप्ताः अंशाः महाघातकराः न स्युः चेदपि [illegible]मिकशिक्षणक्षेत्रस्य भूषणायमानाः तु न । २०१० तमस्य वर्षस्य समाप्तित[illegible] सर्वेऽपि बालाः विद्यालयं गतवन्तः भवेयुः एव इत्यस्ति अस्माकं सङ्कल्पः । किम् एषः सङ्कल्पः साकारः भवेत् ?

पूर्वोक्तं सर्वेक्षणं मुम्बयीस्थया 'प्रथम'नामिकया स्वायत्तसंस्थया कृतं योजनायोगस्य निमित्तम् । देशस्य ३० अधिकेषु जनपदेषु तया एतत् कार्यं कृतम् । अधिकसप्त-ऊनदशवर्षीयाणाम्, अधिकदश-ऊनचतुर्दशवर्षीयाणां च स्तरे सर्वेक्षणं प्रवृत्तम् । एतस्मात् ज्ञायते यत् वर्षारम्भे दश बालिकाः विद्यालयं प्रविशन्ति चेत् तासु षट् बालिकाः वर्षसमाप्तितः पूर्वम् एव विद्यालयं परित्यजन्ति इति ।

विद्यालयं गच्छत्सु पादांशमिताः बालाः (बालकाः बालिकाः च) उत्तरस्य लेखने अपि असमर्थाः । उत्तरप्रदेशस्य अलहाबादलखनऊजनपदेषु स्थितेषु सर्वकारीयेषु उच्चप्राथमिक-माध्यामिकविद्यालयेषु अधीयानाः छात्राः सामान्यपठने अपि असमर्थाः । स्वायत्तसंस्थाभिः चाल्यमानानां विद्यालयानां स्थितिः किञ्चिदुत्तमा दृश्यते ।

यस्मिन् देशे विषूचिका-मलेरियाप्रभृतयः रोगाः निर्मूलिताः, यत्र च पोलियोप्रभृतीनां रोगाणां निवारणाय प्रयासः विशेषतः क्रियमाणः अस्ति, तत्र अशिक्षितता किमर्थम् एवं बाधते ? २०२० तमवर्षस्य समाप्त्यभ्यन्तरे भारतं शक्तिशालिराष्ट्रत्वं प्राप्तुम् इच्छति । सा स्थितिः तदा एव प्राप्येत यदा भारतवासी सर्वोऽपि सामान्यः अक्षरज्ञः वा भवेत् ।

एतस्मिन् क्षेत्रे कार्यं कर्तुम् उत्तमस्य दिनस्य मुहूर्तस्य वा प्रतीक्षा तु करणीया नास्ति ।

*सम्पादकः* – **विश्वम्**









# दारिद्र्यस्य अनुभवः



जीवने ये सर्वदा सुखेन तिष्ठन्ति तैः दरिद्राणां कष्टं न ज्ञायते । वयं दरिद्रान् दृष्ट्वा किं कुर्मः ? प्रायः तं दरिद्रम् अपश्यन्तः एव ततः अग्रे गच्छामः । किन्तु पूर्वं तादृशः कश्चन बालकः आसीत्, यः सर्वं ज्ञात्वा अपि दरिद्रवत् जीवितुम् इच्छन् दरिद्रैः सहपाठिभिः सह निवासं कृतवान् । सः अग्रिमे जीवने महापुरुषः सञ्जातः इति तु कोऽपि आश्चर्यस्य विषयः न ।

सः एव जर्मन्देशे स्थितस्य कस्यचन क्रैस्तपुरोहितस्य पुत्रः आल्बर्टः । एषः सर्वदा स्वस्य प्रियमित्रेण जार्जनित्शेमेन सह भवति स्म ।

कदाचित् सायं शालातः गृहं प्रति आगमनसमये मित्रं जार्जः आल्बर्टम् अपृच्छत् - ''भवान् मया सह मल्लयुद्धं करोति किम् ?'' इति ।

आल्बर्टः अङ्गीकृतवान् । उभयोः मध्ये मल्लयुद्धं जातम् । आल्बर्टः एव जयं प्राप्तवान् ।

तदा सः सन्तोषेण मित्रं पृष्टवान् - ''कथम् आसीत् ?'' इति ।

तदा मित्रं खेदेन अवदत् - ''सप्ताहे द्विवारं भवता यादृशः स्वादुः मांसाहारः प्राप्यते तादृशः एव यदि मयापि प्राप्तः स्यात् तर्हि अहमेव भवन्तं जितवान् स्याम्'' इति ।

एतत् श्रुत्वा आल्बर्टः मौनेन गृहं प्रत्यागतः । जार्ज् तं पश्यन् स्थितवान् । तद्दिने अपि आल्बर्टगृहे मांसभोजनम् आसीत् । किन्तु आल्बर्टः बुभुक्षितः सन्नपि तत् न खादितवान् । गृहे सर्वेऽपि आश्चर्यचकिताः अभवन् । आल्बर्टस्य मनः मित्रस्य वचनमेव चिन्तयत् आसीत् । अतः स्वप्रकोष्ठं गतः सः निर्णयं कृतवान् यत् इतः परम् अहं मम मित्रमिव जीविष्यामि इति ।

तदारभ्य सः स्वनिर्णयं जीवने दर्शयन् वैभवजीवनं त्यक्त्वा सामान्यः इव व्यवहर्तुम् आरब्धवान् । गृहजनानां निन्दा, उपदेशः, भर्त्सनम् इत्यादिकं सर्वमपि तेन सोढम् । एषः बालकः एव अग्रे डा॰ आल्बर्ट श्वेत्ज्नाम्ना प्रसिद्धः । तेन दुर्बलानां सेवार्थं स्वस्य वैभवमयं जीवनं सर्वथा परित्यक्तम् । सः १९५२ वर्षे नोबेल्शान्तिपुरस्कारं प्राप्तवान् ।

## वाचकानां कृते कथास्पर्धा (जुलै) - परिणामः

# स्वास्थ्यैकचिन्तकः वैद्यः



भूस्वामिनः प्रथमदर्शनात् एव वैद्यः अवगतवान् आसीत् यत् एतस्य न कोऽपि रोगः इति । तथापि स्वस्य वृत्तिधर्मं स्मरन् तस्य गृहं पुनः पुनः गच्छन् विविधैः प्रश्नैः रोगस्य स्थितिम् अन्वेष्टुं प्रयासं कृतवान् । अतः एव बहुवारं तदीयं गृहं गतवान् सः । तथापि भूस्वामिनि कोऽपि रोगः न दृष्टः तेन अतः औषधदानस्य आवश्यकताम् अपश्यन् सः वदति स्म – 'औषधम् अग्रे दास्यते' इति ।

भूस्वामिगृहस्य कर्मचारिभिः सह वार्तालापेन वैद्यः अवगतवान् यत् आर्थिकक्लेशस्य कारणतः भूस्वामी चिन्ताग्रस्तः सन् कृशः जातः अस्ति इति । भूस्वामी तु एतां कृशताम् एव रोगस्य फलं भावयति स्म । अतः एव सः वैद्यस्य मेलनं कृतवान् आसीत् ।

दिनानि गतानि । दैवकृपया भूस्वामिनः अर्थक्लेशाः अपगताः । तस्मात् तदीया चिन्ता अपि अपगता । चिन्तायाः अपगमात् तस्य शरीरस्वास्थ्ये प्रगतिः जाता । षण्णां मासानाम् अनन्तरं वैद्यः यदा तम् अपश्यत् तावता सः स्वस्थकायः जातः आसीत् । वैद्यः तं प्रवृत्तं सर्वम् अवदत् । इदानीं भूस्वामिना अवगतं यत् वैद्यः औषधदानं किमर्थम् अग्रे सारयति स्म इति । धनसम्पादनाय अवसरे प्राप्ते अपि तद्विषये किञ्चिदपि चिन्तनम् अकृत्वा भूस्वामिनः स्वास्थ्यलाभम् एव चिन्तितवतः वैद्यस्य व्यवहारं दृष्ट्वा भूस्वामी नितरां सन्तुष्टः । सः योग्येन उपायनदानेन तं सत्कृतवान् ।

**साहिलकुमारमिश्रः**

प्लाट् - १, गृहसङ्ख्या - ४१, मुगलसराय, जिला - चन्दौली - २३२ १०१

उत्तरप्रदेशः

# देव्याः महिमा

रामदुर्गनामके ग्रामे ये कृषिकाः वसन्ति ते सर्वे अतिसामान्याः । तेषु अनक्षरज्ञाः एव अधिकाः । तेषां गृहाणि प्रायः कुटीरसदृशानि, तृणैः आच्छन्नानि च । ग्रामरक्षक-ग्रामप्रमुखादीनां केषाञ्चित् एव गृहाणि मृच्छदेन आच्छन्नानि सन्ति । ग्रामस्य मध्यभागे देव्याः मन्दिरम् अस्ति ।

ग्रामस्य कृषिकेषु ऐक्यभावस्य अभावः । लघुं विषयम् अधिकृत्य अपि कलहं कुर्वन्ति स्म ते ।

औष्ण्यकाले कदाचित् ग्रामस्थेषु कुटीरेषु अग्निस्पर्शः जातः । अग्निः इतरत्र अपि प्रासरत् । एतत् दृष्ट्वा ग्रामीणाः उच्चै आक्रन्दनं कुर्वन्तः अन्यान् जागरूकतावचनानि वदन्तः कासारतः जलम् आनेतुम् उद्युक्ताः जाताः । अन्येषु गृहेषु अपि अग्निः यथा न प्रसरेत् तथा प्रयासः अपि तैः कृतः ।

अग्निं पूर्णतया निवार्य यदा ते गृहं प्रत्यागच्छन्तः आसन् तदा मन्दिरस्य अर्चकः तान् उक्तवान् - 'क्षणं तिष्ठन्तु' इति । सः तान् पुनः अवदत् - ''अस्माकं देवी स्वस्य महिमानं दर्शितवती । अस्मान् जागरय्य रक्षितवती अपि'' इति ।

अर्चकेण किम् उच्यमानम् अस्ति इति ग्रामीणैः न अवगतम् । तदा अर्चकः पुनः अवदत् - ''अस्माकं देवी ज्वालानां द्वारा प्रकाशं प्रसारितवती । अतः वयम् अन्धकारे अपि कार्यं कर्तुं शक्तवन्तः । अन्यच्च, अग्निनिवारणपप्रयासे अस्मासु ऐक्यम् आसीत् । एतत् सर्वदा भवतु इति देव्याः आशयः अस्ति'' इति ।





# अमोघा वाणी

हरि-गिरिनामकौ तरुणौ कस्मिंश्चित् ग्रामे आस्ताम् । तौ उभावपि प्रतिवेशिनौ । किन्तु तयोः व्यवहारशैली तु अतीव भिन्ना । हरिः गृहे मातापित्रोः कार्ये सदा साहाय्यं करोति । ग्रामीणैः सह तस्य व्यवहारोऽपि अतीव मधुरः । समानवयस्कानां बहूनां तरुणानां स्नेहम् अपि सम्पादितवान् अस्ति सः । एतेन सः सर्वेषां प्रशंसापात्रं जातः । सर्वे मातापितरः स्वपुत्रान् वदन्ति स्म यत् पुत्रः नाम हरिरिव भवेत् इति ।

गिरेः व्यवहारः पूर्णतया एतद्विरुद्धः एव । केनापि याचितः अपि सः किञ्चिदपि साहाय्यं न करोति । प्रातः निद्रातः तस्य उत्थानमेव महता विलम्बेन भवति । ज्येष्ठेषु न आदरः तस्य । विना कारणम् अन्यैः सह कलह-करणमपि तस्य स्वभावः । एवं सः सर्वेषां निन्दापात्रम् आसीत् । सर्वे मातापितरः तं दृष्ट्वा वदन्ति स्म यत् गिरिसदृशः पुत्रः कस्यापि न भवेत् इति ।

गिरिः जानाति स्म यत् एतत् मम अपमानाय इति । तथापि स्वव्यवहारः एव अस्य कारणम् इति तु सः न अङ्गीकरोति । सः सर्वान् वदति - ''हरिरेव मम अस्याः परिस्थितेः कारणम्'' इति. । अतः सर्वदा सः हरिं निन्दन् तस्य द्वेषं करोति स्म । तथापि हरिः गिरिविषये अन्यथा न चिन्तितवान् !

कोऽपि गिरेः दुर्गुणं यदि वदति तर्हि हरिः वदति - ''सर्वेषां व्यवहारः समानः न भवति लोके । मया सह गिरेः तोलनं यत् जनैः क्रियते तत् तस्य अपमानं जनयति । अतः एव सः मम विषये क्रुद्धः । वस्तुतस्तु आवां सुहृदौ एव'' इति ।

कदाचित् गिरेः मातुलः तस्य गृहं प्रति आगतः । तस्य नाम शङ्करः । सः आत्मना श्रुतान् विषयान् वदन् गिरिम् उक्तवान् - ''पुत्र ! भवान् बुद्धिमान् अस्ति । अस्माकं ग्रामस्य भूस्वामी उभौ उद्योगिनौ इच्छति । तयोः अन्यतरः कार्यालये कार्यं कुर्यात्, अपरः



अन्यान्यवार्ताः सङ्गृह्य आनयेत् इति भूस्वामिनः इच्छा । भवान् वार्तासङ्ग्राहकः भवतु । पार्श्वगृहवासी हरिः कार्यालयकार्यं करोतु । भूस्वामी कश्चन नियमम् उक्तवान् अस्ति यत् उभौ अपि सहैव आगच्छतः चेत् उद्योगं दास्यामि इति । वेतनमपि अधिकमेव दास्यति सः'' इति ।

''अहम् एकाकी गमिष्यामि चेत् भूस्वामी मह्यम् उद्योगं न दास्यति किम् ?'' इति पृष्टवान् गिरिः ।

''न । भूस्वामी तादृशौ एव इच्छति ययोः वेतनविषये असन्तोषः न भवेत् । भवतः मित्रं हरिः नितरां सज्जनः । भवन्तौ उभौ अपि यदि मिलित्वा गच्छेतां तर्हि उभावपि उद्योगं प्राप्तुं प्रभवेताम् । मम तु विश्वासः अस्ति यत् भवतोः भविष्यम् उज्ज्वलं भविष्यति इति''

इति गिरिं बोधितवान् शङ्करः ।

''मया उद्योगः लप्स्यते वा न वा इत्यत्र मम चिन्ता नास्ति । किन्तु हरिः उद्योगं कथमपि न लभेत इति मम इच्छा'' इति सोद्वेगम् उक्तवान् गिरिः !

''हरिः तु सज्जनः । किमर्थं तस्मै एवम् असूयति भवान् ?'' इति आश्चर्येण पृष्टवान् शङ्करः ।

''हरेः व्यवहारं मम व्यवहारेण तोलयन्तः जनाः मां बहुधा निन्दन्ति । अतः मम भविष्यम् उज्ज्वलं न भविष्यति चेदपि न कापि चिन्ता मम । हरेः भविष्यं कदापि उज्ज्वलं न भवेत् इत्यत्र एव विशेषतात्पर्यं मम'' इति गिरिः उक्तवान् ।

एतेन शङ्करः अवगतवान् यत् गिरिः ईर्ष्यया ज्वलन् अस्ति इति । सः तस्मिन्नेव दिने हरिमपि दृष्ट्वा सर्वं विषयं श्रावयित्वा उक्तवान् - ''भवतोः उभयोः अपि एषः उत्तमः अवसरः । कथमपि भवान् गिरिं बोधयित्वा अस्मिन् विषये तस्य अङ्गीकारं प्राप्नोतु'' इति ।

हरिः तस्य वचनम् अङ्गीकृत्य गिरिं दृष्ट्वा सर्वं बोधितवान् । हरेः वचनं श्रुत्वा गिरिः अवदत् - ''अनेकैः जनैः उक्तं यत् सः भूस्वामी सज्जनः न इति । सः मां कार्यालयकार्ये नियोज्य भवन्तं वार्तासङ्ग्राहकं कुर्यात् । ततः केषुचित् एव दिनेषु मम कार्ये दोषम् अन्विष्य, भवतः कार्ये अपि दोषम् उद्घाट्य आवाम् उद्योगात् निष्कासयेत्'' इति ।

तदा हरिः उक्तवान् - ''मम तु भासते यत् अस्मिन् विषये भवान् भ्रमेण पीडितः अस्ति इति । अतः पुनः चिन्तयतु'' इति ।

गिरिः कोपेन हरिम् उक्तवान् - ''अस्तु नाम । अहं भ्रमाधीनः एव स्याम् । किन्तु मम वचनं तु सर्वदा अमोघमेव भविष्यति । यत् वदामि तत् सम्पन्नमित्येव । मम गृहे सर्वे वदन्ति यत् भवन्मुखात् यत् वाक्यं बहिः निस्सरति तत् अवितथमेव भविष्यति इति । कदाचित् मम इच्छा जाता यत् गृहे क्षीरं विनष्टं भवेत् इति । मया तदेव शब्दैः उक्तम् । तद्दिने गृहे क्षीरं विनष्टमेव । दिनत्रयात् पूर्वं मम मनसि चिन्तनम् आगतं यत् उद्याने स्थितेभ्यः वृक्षेभ्यः जलं दातव्यम् इति । तदा मम मुखात् - 'यदि वृष्टिः भवेत् तर्हि वरम्' इति वचनं निर्गतम् । एतस्य वाक्यस्य निःसृतिसमनन्तरम् एव वृष्टिः आगता । मया उक्तम् अस्ति इदानीं यत् भूस्वामी दुष्टः इति । तत् तथैव भविष्यति, न तु अन्यथा । मम वचने विश्वासः भवतु भवतः'' इति ।

''भवतः कल्पनाः समीचीनाः उत न इति तु अहं न जानामि । किन्तु उद्योगस्य प्राप्तिः मम हस्तात् च्युता किल इति दुःखं मां बाधते'' इति खेदेन उक्तवान् हरिः ।

''भवतः या अवस्था, सा एव अवस्था ममापि । मम कारणात् एव उद्योगस्य अवकाशः नष्टः अभवत् इति भावः अस्ति भवतः मनसि । किन्तु एतत् असत्यम् । भवता इतोऽपि समीचीनः अवकाशः केषुचिदेव दिनेषु लप्स्यते । तदा, प्राप्तः अवकाशः विनष्टः इति या भावना इदानीं भवतः मनसि अस्ति तस्याः स्थाने महान् आनन्दः स्थास्यति । मम वाणी सदा अमोघा एव । मया उक्तं सर्वं सम्पत्स्यते एव'' इति अवदत् गिरिः ।

ततः चतुर्षु एव दिनेषु गिरेः वचनस्य प्रभावेण इव काचन घटना संवृत्ता । हरेः दूरबन्धुः कश्चन केशवनामकः वार्तां प्रेषितवान्



यत् अविलम्बेन नगरम् आगत्य मां पश्यतु इति ।

समुद्रवाणिज्यं कुर्वन् सः केशवः प्रभूतं धनं सम्पादितवान् आसीत् । तस्य सन्ततिः न आसीत् । वार्धक्ये स्थितः सः गृहे एव विश्रान्त-जीवनं यापयति । तस्य काचन इच्छा यत् एषा प्रभूता सम्पत्तिः परोपकाराय भवेत् इति । अतः तादृशं दायित्वं स्वीकर्तुं कश्चन समर्थः योग्यः तरुणः तेन अपेक्षितः आसीत् । तदा तेन हरिः स्मृतः । 'हरिः मम सम्पत्तेः पाद-भागस्य अधिकारी भवतु, अन्यस्य पादोन-भागस्य योग्यम् उपयोगं तद्द्वारा कारयिष्यामि' इति चिन्तितम् आसीत् केशवेन ।

केशवस्य सूचनाया अनुसारं हरिः नगरम् आगतः । केशवः हरिं बहु इष्टवान् । ततः केषाञ्चन दिनानाम् अनन्तरं हरिः स्वग्रामम् आगत्य, कष्टस्थितौ ये साहाय्यं कृतवन्तः तेभ्यः सर्वेभ्यः अपि उपायनानि दत्तवान् । तथा उपयानस्वीकर्तृषु मातापितरौ, भ्रातरः, भगिन्यः, गुरवः, मित्राणि इत्यादयः सर्वेऽपि आसन्, ऋते गिरेः ।

एतत् ज्ञातवन् गिरिः हरिं दृष्ट्वा सविषादम् उक्तवान् - ''मम अमोघायाः वाण्याः प्रभावात् एव भवता एतादृशी स्थितिः प्राप्ता । जनाः भवतः प्रशंसां कुर्वन्ति । किन्तु उपायन-दानसमये भवता अहमेव विस्मृतः इति तु आश्चर्याय एव'' इति ।

एतत् श्रुत्वा हरिः उक्तवान् - ''भवतः इच्छा आसीत् यत् मया उद्योगः न प्राप्तव्यः इति । अतः एव प्राप्तम् उद्योगमपि भवान् त्यक्तवान् । कस्यचन वाणी तदा एव अमोघा भवितुम् अर्हति, यदा च तस्य हृदयं पवित्रं निर्मलं च भवेत् । एतत् भवति नास्त्येव । पूर्वम् उक्त घटनाद्वयमपि स्वार्थसम्पादनाय भवता एव कल्पितम् । अपि च दुष्टं कार्यं यत् घटते तत् अमोघवाण्याः प्रभावेण न । जनाः भवद्विषये वदन्ति 'तस्य जिह्वायां कृष्णवर्णं चिह्नम् अस्ति' इति । एतादृशाय अयोग्याय भवते उपायनदानमपि अनुचितमेव । ये मया उपायनदानाय आहूताः तेषु सौजन्यम् अस्ति । अत एव अहं भवते किमपि उपायनं न दत्तवान्'' इति ।

हरेः अनेन उत्तरेण किमपि वक्तुम् अशक्तः गिरिः शिरः अवनमय्य ततः निर्गतवान् ।





# भल्लूकमान्त्रिकः

## १३

*[राजा दुर्मुखः स्वराज्यं बलात् वशीकृतवन्तं सामन्तम् अनुसृत्य गत्वा दुर्गस्य अन्तः गतवान् । वधकभल्लूकः उग्रदण्डः च दुर्गभित्तेः द्वारस्य भञ्जनाय प्रयासरतौ आस्ताम् । तावता तत्रत्यैः मायामर्कटः दृष्टः । कालीवर्मणः भल्लूकमान्त्रिकस्य च आगमनं दृष्ट्वा मायामर्कटः दुर्गस्य अन्तर्भागं प्रति गतवान् । एतदनन्तरम् ... ]*

कालीवर्मणः भल्लूकमान्त्रिकस्य च दर्शनात् वधकभल्लूकः नितरां सन्तुष्टः । सः उत्साहेन नृत्यन् परशुं भ्रमयन् - ''अहो ! बहूनां दिनानाम् अनन्तरं भवतोः दर्शनं प्राप्तं मया । परमं सौभाग्यं मम । मम सर्वाणि कष्टानि अपगतानि इव'' इति अवदत् ।

भल्लूकमान्त्रिकः महिषात् अवतीर्य वधकभल्लूकस्य समीपं गत्वा अवदत् - ''अये, सः मर्कटरूपी वस्तुतः न मर्कटः । मिथ्यामिश्रनामकस्य मान्त्रिकस्य शिष्यः भ्रान्तमतिः सः । सः मम मन्त्रदण्डं चोरितवान् अस्ति । तस्य मन्त्रदण्डस्य प्राप्त्यर्थम् आदौ अस्माभिः प्रयासः करणीयः'' इति ।

कालीवर्मा उग्रदण्डराक्षसादीन् आश्चर्येण पश्यन् वधकभल्लूकम् अपृच्छत् - ''वधकभल्लूक ! राक्षसः, गजः, भिल्लतरुणः इत्यादीन् भवान् कथं वा एतावता अल्पेन कालेन सम्पादितवान् ?'' इति ।

एतत् श्रुत्वा मन्दहासं प्रकटयन् उग्रदण्डः कालीवर्माणम् उद्दिश्य - ''कालीवर्मनामकः

द्योतयति'' इति ।

भल्लूकमान्त्रिकः पिहितं दुर्गद्वारं परीक्षा-दृष्ट्या सकृत् दृष्ट्वा अवदत् - ''मम गुरुम् एव कष्टगर्ते पातितवतः तान्त्रिकस्य शिष्यः अस्ति एषः मायामर्कटः । एषः मां गुप्तरूपेण अनुसरन् अस्ति इति मया न ज्ञातम् आसीत् । अतः मया मन्त्रदण्डविषये विशेषावधानं न दत्तम् आसीत् । मन्त्रदण्डं नदीतीरे वृक्ष-शाखायां संस्थाप्य मया स्नानाय गतम् । तदेव प्रमादाय जातम्'' इति ।

वधकभल्लूकः परशोः धारां हस्तेन सकृत् स्पृष्ट्वा भल्लूकमान्त्रिकसमीपम् आगत्य अवदत् - ''मान्यवर ! मान्त्रिकप्रभो ! मन्त्रदण्डः नष्टः इति खेदः सर्वथा मास्तु भवतः । एषः मम परशुः अपि मन्त्रप्रभावयुक्तः एव । एतस्य प्रभावतः राक्षसः उग्रदण्डः अपि भीतः । अतः एतं स्वीकृत्य भवान् मां यथापूर्वं मानवं करोतु'' इति ।

''भवता गुरवे भल्लूकमान्त्रिकाय राज्ञः दुर्मुखस्य शिरः अर्पणीयं खलु ? किं तत् विस्मृतं भवता ?'' इति अपृच्छत् राक्षसः उग्रदण्डः ।

दुर्मुखस्य नाम्नः श्रवणात् भल्लूकमान्त्रिकः आश्चर्यचकितः सन् अवदत् - ''वधक-भल्लूक ! किं सः राजा इतोऽपि जीवति ? सामन्तः सूर्यभूपतिः कः ? दुर्गस्य अन्तः कयोः युद्धं प्रचलति ?'' इति ।

वधकभल्लूकः राज्ञः दुर्मुखस्य अनुसरणात् आरभ्य प्रवृत्तं सर्वम् अपि सङ्क्षेपेण विवृत्य - ''मान्त्रिकप्रभो ! यथा अस्माभिः चिन्तितं तथा राजा दुर्मुखः न महादुष्टः । अतः अग्रे



क्षत्रियतरुणः भवान् एव खलु ? भवतः विषये मया वधकभल्लूकस्य मुखात् बहु श्रुतम् अस्ति । भवता सह आगतः भल्लूकमान्त्रिकः एव स्यात्'' इति उक्त्वा चन्द्रशिलादेशस्य राज्ञः जितकेतोः मन्त्रिणं, तदीयं सैन्यं च दर्शयन् पुनः अवदत् - ''कालीवर्मन् ! मायामर्कटस्य-मुखात् अस्माभिः श्रुतं यत् राज्ञः जितकेतोः सैनिकाः भवतः ग्रहणाय एव आगताः इति । तेभ्यः आत्मा कथं रक्षणीयः इति किं चिन्तितं भवता ?'' इति ।

भल्लूकमान्त्रिकं पश्यन् कालीवर्मा अवदत् - ''गुरुवर्य ! स्वसामर्थ्यं राजानं जितकेतुं सकृत् अवगमितवान् आसीत् भवान् । एवं स्थिते अपि तस्य मन्त्री जीवगुप्तः अस्माकम् अनुसरणं किमर्थं कुर्वन् अस्ति इति तु न ज्ञायते । सर्वम् एतत् जितकेतोः अविवेकितां

किं करणीयम् इति विषये पुनश्चिन्तनम् अपि वरम् एव । ततः पूर्वं मां मानवरूपेण परिवर्तयतु इति सविनयप्रार्थना मम । एतस्मात् भल्लूकरूपात् नितरां जुगुप्सितः अस्मि अहम्'' इति अवदत् ।

''गुरुवर्य ! वराकस्य एतस्य इच्छां पूरयतु कृपया'' इति सानुरोधम् अवदत् भल्लूक-मान्त्रिकं कालीवर्मा अपि ।

एतत् अङ्गीकुर्वन् भल्लूकमान्त्रिकः परशुं गृहीत्वा क्षणकालं यावत् कमपि मन्त्रम् अपठत् । ततः तेन परशुना वधकभल्लूकस्य पादौ अस्पृशत् । अनन्तरक्षणे वधकभल्लूकस्य पादौ मानवपादरूपेण परिवृत्तौ । ततः मान्त्रिकः वधकभल्लूकस्य एकैकम् अपि अङ्गं परशुना अस्पृशत् । तानि सर्वाणि अङ्गानि मानवाङ्गानि जातानि । किन्तु शिरोमात्रं भल्लूकशिरोरूपेण अतिष्ठत् ।

मानवरूपं प्राप्तम् इति चिन्तयन् वधक-भल्लूकः नितरां सन्तुष्टः । सः भल्लूकमान्त्रिकं साष्टाङ्गं प्रणम्य – ''मान्त्रिकप्रभो ! बहूनां दिनानाम् अनन्तरं मया मानवरूपं प्राप्तम् अस्ति । अहं नितरां प्रमुदितः अस्मि । मम आनन्दः शब्दैः वर्णयितुम् अशक्यः'' इति अवदत् ।

एतत् वचनं श्रुत्वा नागमल्लादयः सर्वे उच्चैः हसितवन्तः । वधकभल्लूकः महता आश्चर्येण तान् अपश्यत् । राक्षसः उग्रदण्डः वधकस्य शिरः स्वगदया स्पृष्ट्वा अवदत् – ''मित्र ! भवता मानवशरीरं प्राप्तम् इति तु सत्यम् एव । किन्तु भवतः शिरः भल्लूकशिरः एव अस्ति खलु'' इति ।



वधकः हस्ताभ्यां शिरः स्पृष्ट्वा भल्लूक-शिरस्कत्वं दृढीकृत्य विषादमिश्रितेन स्वरेण अवदत् – ''मान्त्रिकप्रभो ! किमेतत् कृतं भवता ! मानवानां मध्ये मदीयम् एतत् रूपम् उपहासास्पदं भवेत् निश्चयेन । एतेन रूपेण अहं मानवानां मध्ये जीवितुं न अर्हामि । भवत्कारणतः इतो भ्रष्टः, ततोऽपि भ्रष्टः जातः अस्मि अहम् । कृपया रक्षणीयः अहम्'' इति ।

तदा भल्लूकमान्त्रिकः चिन्तापूर्णेन स्वरेण अवदत् – ''वधक ! एतावता एव सन्तोष्टव्यं भवता । भवतः मुण्डं भल्लूकस्य एव चेदपि तस्य अन्तः स्थितं मस्तिष्कं तु मानवस्य एव खलु ? मायामर्कटरूपेण आगतः भ्रान्तमतिः मम मन्त्रदण्डं यत् चोरितवान् तस्य कारणतः मम मन्त्रशक्तिः क्षीयमाणा अस्ति । अतः



वधकभल्लूकः जीवगुप्तदिशि दृष्टिं प्रसार्य भीतियुक्तेन स्वरेण अवदत् – ''राजा उद्योगं दद्यात् वा न वा इत्यत्र मम सन्देहः अस्ति । किन्तु जितकेतुविषये तु मम पूर्णः विश्वासः अस्ति यत् सः म शिरश्छेदम् एव कारयिष्यति इति'' इति ।

एतत् श्रुत्वा भल्लूकमान्त्रिकः परशुं वधकभल्लूकाय यच्छन् – ''वधकभल्लूक ! एषः परशुः भवत्समीपे एव भवतु । एतस्यापि काचित् मन्त्रशक्तिः तु अस्ति एव खलु ? अतः आपत्काले एषः परशुः भवतः रक्षणं करिष्यति'' इति उक्त्वा स्वस्य कटौ स्थितं खड्गं हस्तेन गृहीत्वा अवदत् – ''एषः खड्गः मायावानरेण अपहृतः मन्त्रदण्डः इव न स्यात् नाम, तथापि मद्रक्षणाय तु एषः पर्याप्तः एव'' इति ।

''आत्मरक्षणं मम मुख्यसमस्या न । मम उद्योगस्य का गतिः भवेत् ? एते नागमल्लादयः यथा यात्रिकाणां लुण्ठनं कुर्वन्ति तथा निन्द्यं कार्यम् अहं तु कर्तुं न शक्नोमि'' इति अवदत् वधकभल्लूकः ।

एतत् श्रुतवान् नागमल्लः महान्तं क्रोधं प्राप्य हस्तेन खड्गं गृहीत्वा इतस्ततः चालयन् – ''अये भल्लूकशिरस्क ! किं मां निन्द्यं भावयति भवान् ? सैनिकानां जनानां च साहाय्येन किमपि कार्यं विशेषक्लेशं विना साधयितुं शक्येत । किन्तु घोरे अरण्ये प्रयाणिकानां लुण्ठनं करणीयं चेत् धैर्यं साहसप्रवृत्तिः च भवेत् एव । एषोऽहं मम एतं खड्गं पार्श्वे स्थापयामि । भवान् अपि परशुं परित्यज्य मल्लयुद्धाय सन्नद्धः भवतु । कः शूरः इति

अहं भवन्तं पूर्णरूपेण मानवं कर्तुं न शक्तवान् । मम मन्त्रदण्डः यदा प्रतिप्राप्स्यते तदा भवतः पूर्णमानवरूपतां कल्पयितुं प्रयासं करिष्यामि'' इति ।

एतत् श्रुत्वा वधकभल्लूकः खेदेन अश्रूणि स्रावयन् अवदत् – ''मम एतत् विलक्षणं रूपं दृष्टवान् राजा जितकेतुः मह्यं पुनरपि प्रधानवधकपदं दद्यात् इत्यत्र मम न कोऽपि विश्वासः'' इति ।

कालीवर्मा वधकभल्लूकस्य समीपं गत्वा तस्य स्कन्धे हस्तं संस्थाप्य अवदत् – ''मित्र ! अलं चिन्तया । भल्लूकमान्त्रिकस्य मन्त्रदण्डः चोरितः अस्ति इति वार्तां ज्ञातवान् जितकेतुमन्त्री जीवगुप्तः अस्माकं ग्रहणाय अत्र उपस्थितः अस्ति । भवान् तं शरणं गच्छतु । सः भवते उद्योगं दद्यात्'' इति ।

निर्णयः अत्रैव भवतु नाम'' इति वदन् मल्ल-युद्धाय सज्जः जातः ।

तदा भल्लूकमान्त्रिकः क्रोधं प्राप्य सर्वान् पश्यन् कालीवर्माणम् अवदत् - ''काली-वर्मन् ! एते मूर्खाः न जानन्ति यत् कीदृशी विपत् उपस्थिता अस्ति इति । अस्माकं शिरश्छेदाय जितकेतोः मन्त्री योजनां कृतवान् अस्ति । एषः दुर्गस्य बहिर्भागे स्थितः अपायः । दुर्गस्य अन्तर्भागतः अपि अपायः अस्ति एव । अन्तः प्रचलति युद्धे यस्य जयः भविष्यति तं मायामर्कटः अवश्यं प्रेरयिष्यति अस्माकं सर्वेषां संहाराय । एतत्सर्वम् अजानन्तः एते परस्परकलहे निमग्नाः सन्ति इति तु महते खेदाय'' इति ।

''अयि भोः, सर्वैः श्रुतं खलु भल्लूक-मान्त्रिकस्य वचनम् ? अत्रत्यानां सर्वेषां नायकः कः इति ज्ञायते खलु भवद्भिः सर्वैः अपि ?'' इति खड्गहस्तः कालीवर्मा उच्चेन स्वरेण अवदत् ।

तदा तत्रत्याः सर्वे ऐककण्ठ्येन अवदन् - ''जयतु कालीवर्मा !'' इति ।

कालीवर्मा तृप्तिं प्रकटयन् राक्षसस्य उग्र-दण्डस्य समीपं गन्तुं यावत् उद्युक्तः तावता जीवगुप्तस्य कश्चन अश्वारोही सैनिकः खड्गम् अधोमुखतया गृहीत्वा तत्र उपस्थितः ।

सः सर्वान् उद्दिश्य अवदत् - ''भोः, भोः ! सर्वे सावधानतया शृण्वन्तु । अहं महाराजस्य जितकेतोः मन्त्रिणः जीवगुप्तस्य सन्देशं स्वीकृत्य अत्र उपस्थितः अस्मि'' इति ।

''अतः एव भवान् खड्गम् अधोग्रतया गृहीत्वा आगतवान् अस्ति ! भवतु नाम । भवता आनीतः सः सन्देशः कः ?'' इति अपृच्छत् कालीवर्मा ।



''महामन्त्रिणः जीवगुप्तस्य आदेशः अस्ति यत् प्रधानवधकेन अविलम्बेन एव तत्समीपे उपस्थातव्यम् इति । राज्ञः मरण-दण्डनाज्ञातः आत्मानं रक्षित्वा सञ्चरतः कालीवर्मणः बन्धनं करणीयम् इत्यपि तेन आज्ञा कृता अस्ति'' इति अवदत् सः अश्वारोही ।

वधकभल्लूकः द्वित्रक्षणान् यावत् मौनेन स्थित्वा ततः शिरः अवनमय्य कालीवर्माणम् अवदत् - ''कालीवर्मवर्य ! मया इदानीं किं करणीयम् ? यदि अहं एतत् भल्लूकशिरः धरन् चन्द्रशिलानगरं गच्छेयं तर्हि तत्रत्याः बालकाः शिलाप्रहारेण मां मारयेयुः अपि । आत्मरक्षणाय मया इदानीं को वा मार्गः आश्रयणीयः ?'' इति ।

कालीवर्मा स्वस्य खड्गस्य अग्रेण वधक-भल्लूकं स्पृशन् उक्तवान् - ''वधकभल्लूक ! भवतः स्वामिभक्तिः प्रशंसार्हा एव अस्ति । दुर्गस्य अन्तः स्थितस्य मायामर्कटस्य ग्रहणम् अस्माकम् आद्यं कर्तव्यम् । तावत्कालम् अपि यदि दुर्मुखः सजीवं स्थितः स्यात् तर्हि तस्य रक्षणाय प्रयासः अस्माकम् अपरं कार्यम् । जितकेतुतः अपि दुर्मुखः एव उत्तमः इति भाति । जीवगुप्तस्य मन्त्रिणम् उद्दिश्य उत्तरं वक्तव्यं खलु ? उपस्थितस्य दूतस्य शिरः कर्तनीयम् उत तस्य खड्गं छिन्नीकृत्य इतः सः प्रतिप्रेषणीयः इति तु भवता एव निर्णेतव्यम्'' इति ।

वधकभल्लूकः झटिति अग्रे गत्वा अश्वा-रोहिणः हस्ते स्थितं खड्गं वशीकृत्य खण्डशः छिन्नीकृत्य तान् खण्डान् दूरे क्षिप्त्वा - ''अये दूत ! मया जितकेतुतः वेतनं प्राप्तम् । प्रतिफल-रूपेण वधककार्यं कृतम् अपि । तस्मात् अहम् ऋणात् मुक्तः अस्मि एव । भवान् जीवगुप्तं वदतु यत् विना प्रतिवचनम् इतः प्रतिगन्तव्यम् इति । अन्यथा मया तस्य शिरः कर्तयित्वा शिरीषभैरवाय अर्पयिष्यते'' इति ।

एतत् श्रुत्वा नितरां भीतः सः अश्वारोही ततः निर्गमनाय यावत् स्वस्य अश्वं प्रेरितवान् तावता दुर्गद्वारसमीपात् घोषणध्वनिः श्रुतः - ''कालीवर्मा जयतात्'' इति ।

भल्लूकमान्त्रिकः अन्ये च दुर्गद्वारदिशि दृष्टिं प्रसारितवन्तः । दुर्गद्वारं ज्वलत् दृष्टं तैः ।

- *(अनुवर्तते)*



# वेताल-कथा

## राजा चोरः

ह[illegible]ती त्रिवि[illegible]रपि वृक्षस्य समीपं [illegible]त्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन् ! भवतः एषः कठोरः परिश्रमः मयि आश्चर्यं जनयति । मम तु भाति यत् कोऽपि भवन्तम् अपमानितवान् स्यात्, तदर्थम् एव भवान् आत्मनः अपमानस्य गोपनाय एतादृशे कार्ये प्रवृत्तः स्यात् इति । स्वस्य अपमानं सर्वेऽपि गोपयितुम् इच्छन्ति इति तु सहजम् एव । राजादिषु जनेषु तु एतादृशी प्रवृत्तिः आधिक्येन दृश्यते । पूर्वं सुनीलः नाम राजा अपि एवमेव व्यवहृतवान् आसीत् । केनचित् चोरेण वञ्चितः



विद्यार्जने विशेषासक्तिः दर्शिता, निरन्तर-परिश्रमश्च कृतः । अतः एव अल्पे एव काले सर्वाः विद्याः अधीताः भवता । सकलविद्या-पारङ्गतस्य भवतः इतः परं गुरुकुले स्थितिः न आवश्यकी । विद्या सर्वेषां मानवानां जीवने नयनायते । शासकस्य जीवने तु सा विद्या विशेषोपयोगिनी । अधिकारिगणः स्वमत्यनु-गुणं सूचनाः ददाति । राजा तासां युक्तायुक्ततां स्वज्ञानबलेन निर्णीय शासनव्यवहारं निर्वहेत् । तदा एव शासनम् उत्कृष्टं भवितुम् अर्हति । राज्ञा परोपकारे अपि सदा आसक्तिः वोढव्या । परोपकारः एव जीवनस्य परमार्थः । एतत् परमसत्यं कदापि न विस्मरणीयं भवता । एतदेव भवत्तः मया अपेक्ष्यमाणा गुरु-दक्षिणा'' इति ।

सुनीलः भक्तिपूर्वकं गुरुं नमस्कृतवान् । गुरुः तं प्रीत्या उत्थाप्य आशिषा अनुगृहीत-वान् ।

ततः गुरुकुलस्य अभिवृद्ध्यै पित्रा यानि अमूल्यानि उपायनानि प्रेषितानि आसन् तानि गुरवे भक्त्या समर्प्य सुनीलः राजधानीं प्रत्यागतवान् ।

विद्यया सुशोभितः सन् प्रत्यागतवन्तं पुत्रं दृष्ट्वा राजा नितरां सन्तुष्टः । मन्त्रिणां राजगुरोः च परामर्शस्य अनुगुणं राजा सुधीरवर्मा पुत्रस्य राज्याभिषेकं सवैभवं निर्वर्तितवान् । सुनीलः योग्येन क्रमेण राज्यशासनम् आरब्धवान् अपि ।

गुरुकुलात् निर्गमनसमये गुरुणा यत् उक्तं तत् सदापि सुनीलस्य कर्णयोः गुञ्जति स्म । सः छद्मवेषं धृत्वा राज्ये तदा तदा सञ्चरति

सः तम् अपमानप्रसङ्गं गोपयितुम् इच्छति स्म । अतः एव चोरः भटैः गृहीतः चेदपि राजा तं कारागारात् विमुक्तं कृतवान् । न्यायस्थानम् अपि अलङ्कुर्वन् राजा एतादृशं व्यवहारं यत् कृतवान् तत् सर्वथा अनुचितम् । भवतः मार्गायासस्य परिहाराय, भवति विवेकस्य जागरणाय च तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

राज्ञः सुधीरवर्मणः पुत्रः सुनीलः । सः दयानन्दमुनेः आश्रमे वसन् विद्याभ्यासं कृत-वान् । अल्पे एव समये स्वकीयं विद्याभ्यासं समापितवान् सः । उच्चं शिक्षणं प्राप्तवान् आसीत् सः ।

कदाचित् गुरुः दयानन्दः सुनीलं स्व-समीपम् आहूय अवदत् - ''वत्स ! भवता

स्म, प्रजानां समस्याः स्वयम् अवगच्छति स्म च ।

विपत्तिग्रस्तानां कष्टस्य निवारणात् महान्तम् आनन्दम् अनुभवति स्म सः । प्रजानां समस्यायाः निवारणाय विविधान् मार्गान् अन्विष्यति स्म अपि ।

कदाचित् सः वणिग्वेषेण देशसञ्चारं कुर्वन् आसीत् । राजाधानीतः अनतिदूरे एव प्रवहन्त्याः नद्याः तीरे किञ्चन अरण्यम् आसीत् । तत्परिसरे स्थितं कञ्चित् ग्रामं प्राप्तवान् राजा ।

तावता कश्चन आर्तनादः श्रुतः तेन – ''मम पुत्रः रक्ष्यताम् । भो भोः, रक्ष्यतां मम पुत्रः'' इति ।

एतम् आर्तनादं श्रुत्वा राजा तस्यां दिशि दृष्टिं प्रसारितवान् । तत्र कस्यचित् कूपस्य पार्श्वे स्थित्वा आर्तनादं कुर्वन् कश्चित् दृष्टः तेन ।

सः पुरुषः वणिग्वेषेण स्थितं राजानं दृष्ट्वा दैन्येन अवदत् – ''महाशय ! मम पुत्रः कूपे पतितः । अहं तु विकलाङ्गः अस्मि । अतः कूपम् अवतर्तुं न शक्नोमि । कृपया भवान् मम पुत्रं रक्षतु'' इति ।

राजा वस्त्रग्रन्थिं कूपस्य पार्श्वे स्थापयित्वा कूपस्य अन्तः गतवान् । कूपे सर्वत्र तेन अन्वेषणं कृतम् । किन्तु कूपे कोऽपि बालः न दृष्टः तेन । अतः सः कूपात् उपरि आगतवान् ।

तदा कूपसमीपे कोऽपि न आसीत् । तदीयः वस्त्रग्रन्थिः अपि न दृश्यते स्म । आत्मानं विकलाङ्गं कथितवान् जनः एव मां वञ्चितवान्



इति अवगत्य राजा मौनेन राजधानीं प्रतिगतवान् ।

दश दिनानि अतीतानि । कदाचित् राजा सिंहासने उपविष्टवान् आसीत् । तदा भटाः निगडबद्धहस्तं कञ्चित् चोरं गृहीत्वा आनीतवन्तः ।

राजा तं सकृत् तीक्ष्णदृष्ट्या दृष्ट्वा सैनिकान् अपृच्छत् – ''एतेन कः अपराधः कृतः ?'' इति ।

''प्रभो ! आभूषणवणिजः पुण्यगुप्तस्य गृहे रात्रौ चोर्यसमये एषः अस्माभिः गृहीतः'' इति अवदन् सैनिकाः ।

राजा क्षणं विचिन्त्य भटान् अवदत् – ''अस्तु नाम । एतम् अद्य कारागारे स्थापयन्तु । श्वः एतस्य विचारणा करिष्यते मया'' इति ।



भटाः राज्ञः आज्ञां पालयन्तः तं कारागारे स्थापितवन्तः ।

तद्दिने मध्यरात्रसमये राजा वणिग्वेषं धृत्वा कारागारं प्रविष्टवान् । निद्रां कुर्वन्तं चोरं जागरितवान् च ।

चोरः भीतिम् अनुभवन् उत्थितवान् । पुरतः स्थितं वणिजं दृष्ट्वा आश्चर्येण सः अपृच्छत् - "भवता कथम् अत्र आगतम् ? किं भवान् अपि चोरः ?" इति ।

तदा राजा उत्तरं किमपि अवदन् स्वस्य उष्णीषश्मश्रुप्रभृतीन् अपसारितवान् । तदा चोरः तं सम्यक् अभिज्ञातवान् । स्वस्य पुरतः स्थितं राजानं दृष्ट्वा सः नितरां दिग्भ्रान्तः जातः ।

सः महता भयेन कम्पमानः - "प्रभो, कृपया क्षन्तव्यः अहम् । असत्यम् उक्त्वा भवन्तं वञ्चयित्वा चौर्यं कुर्वता मया महान् अपराधः कृतः । अग्रे एवं कदापि न करिष्यामि । कृपया अहं रक्षणीयः । कृपया मम अपराधः क्षन्तव्यः" इति वदन् राज्ञः पादौ गृहीतवान् ।

"अपराधिना दण्डः अवश्यं प्राप्तव्यः । वणिजः गृहे चौर्यसमये भवान् भटैः गृहीतः । एतस्य निमित्तं भवान् यथायोग्यं दण्डितः भवेत् एव । भवान् मां वञ्चितवान् यत् तदर्थं यः दण्डः भवेत् तं तु दूरीकर्तुं शक्नोमि अहम् । किन्तु कूपपार्श्वे यत् प्रवृत्तं तत् कमपि भवान् न वदेत् इति तु नियमः । किं भवता मम नियमः अङ्गीकरिष्यते ?" इति ।

"भवता यथा आदिश्यते तथा अवश्यं करिष्यामि प्रभो" इति अश्रूणि स्रावयन् अवदत् चोरः । राजा ततः कारागारतः निर्गतवान् ।

अनन्तरदिने भटाः चोरं राज्ञः पुरतः आनीतवन्तः विचारणाय । सभासदः सर्वे राज्ञः निर्णयस्य श्रवणे विशेषकुतूहलिनः आसन् ।

राजा चोरम् अपृच्छत् - "आभरण-वणिजः पुण्यगुप्तस्य गृहे चौर्याय किं भवता प्रयासः कृतः ?" इति ।

"आं प्रभो !" इति शिरः अवनमय्य अवदत् चोरः ।

"किम् एतत् भवतः प्रथमचौर्यम् ? अथवा चौर्यम् एव भवतः वृत्तिः अस्ति ?" इति अपृच्छत् राजा ।

"प्रभो ! चौर्यं मम वृत्तिः तु न । यदा मम अध्ययनं समाप्तं तदा कस्यचित् चौर्यस्य

आरोपः मयि अकस्मात् आपतितः । अहं तु निर्धनः निर्बलः च आसम् । अतः कारागारवासेन अहं दण्डितः अपि । वस्तुतः तु तत् चौर्यं मया न कृतम् आसीत् । कारागारात् बहिः आगमनस्य अनन्तरं मह्यं कोऽपि उद्योगं न दत्तवान् । जीविकार्थं मया बहुधा भ्रमणं कृतम् । तथापि कुत्रापि उद्योगः न प्राप्तः । महती बुभुक्षा मां पीडयति स्म । अतः अहं जीवनात् जुगुप्सितः सन् मरणाय अरण्यं गतवान् । कूपे पतनाय मतिं कृतवान् । किन्तु तदर्थं धैर्यं न आसीत् । तावता तत्र कश्चित् आगतः । अहम् उपायेन तं वञ्चयित्वा तदीयं वस्त्रग्रन्थिम् आहारग्रन्थिं च चोरितवान् । तेन आहारेण मम उदरं पूर्णं जातम् । वस्त्राणां विक्रयणतः किञ्चित् धनम् अपि प्राप्तम् । तदा मम मनसि भावना आगता यत् चौर्यवृत्तिः एव सरला इति । अतः अहं जीवनयापनाय कानिचन चौर्याणि पुनः कृतवान् । ह्यः रात्रौ आभरणवणिजः गृहे यदा अहं चौर्याय उद्युक्तः तदा भटाः मां गृहीतवन्तः'' इति अश्रूणि स्रावयन् अवदत् चोरः ।

''यदि जीवनयापनाय उत्तमः अवकाशः प्राप्येत तर्हि किं भवान् चौर्यवृत्तिं त्यजेत् ?'' इति अपृच्छत् राजा ।

''निश्चयेन । चौर्यस्य कीदृशं फलम् इति मया अवगतम् अस्ति एतावता एव । उत्तमस्य जीवनस्य यापनाय यदि अवकाशः प्राप्येत तर्हि अहम् अवश्यं चौर्यं त्यजामि'' इति अवदत् चोरः ।

''येषां वस्तूनि भवता चोरितानि तेषां वस्तूनि भवता दशदिनाभ्यन्तरे प्रत्यर्पणीयानि, तेषां क्षमा च याचनीया । तावत् भवता सह मम भटाः केचन भविष्यन्ति । तदनन्तरं भवते योग्यः उद्योगः दापयिष्यते मया'' इति अवदत् राजा ।

''एतत् शिरसा धार्यते महाप्रभो'' इति



वदन् चोरः भटान् अनुसरन् ततः निर्गतवान् ।

राजा गुरोः वचनानि पुनः अपि स्मरन् आसनात् उत्थितवान् ।

वेतालः एवं कथां समाप्य अवदत् – "अये राजन् ! अपराधी अवश्यं दण्डितः भवेत् इति राजा वदति स्म एकत्र । अपरत्र सः एव चोरं क्षान्तवान् अपि । किम् एतत् विचित्रं न ? तत्रापि यः राजानम् एव वञ्चितवान् तमेव राजा क्षान्तवान् इति तु महते आश्चर्याय एव खलु ? कूपसमीपे या वञ्चना जाता तां मा प्रकाशयतु इति राज्ञा किमर्थम् उक्तम् ? चोरः न दण्डितः चेत् किं राज्ये चौर्यप्रवृत्तिः न वर्धेत ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् – "यः अपराधं कृतवान् तस्य दण्डनं भवेत् एव इति तु सत्यम् । किन्तु अस्माभिः एतदत्र न विस्मर्तव्यं यत् दण्डस्य उद्देशः अपराधिनः मनःपरिवर्तनम् एव इति । चोरः कारागारे यदा राजानं दृष्टवान् तदा एव चोरे परिवर्तनप्रक्रिया आरब्धा । चोरेण पश्चात्तापः प्रकटितः इत्यतः राजा तस्य वचने विश्वासं कृतवान् । चोरः येन कारणेन चौर्ये प्रवृत्तः तत् कारणं निवारितं चेत् चोरः पुनः चौर्ये न प्रवर्तेत एव । एतम् अंशम् अवगच्छन् राजा चोराय आत्मपरिष्काराय कञ्चित् अवकाशं कल्पितवान् । अतः राज्ञः व्यवहारः नितराम् औचित्यपूर्णः अस्ति । कूपसमीपे यत् प्रवृत्तं तत् कुत्रापि न वक्तव्यम् इति राज्ञा यत् उक्तं तस्यापि किञ्चन विशेषकारणम् अस्ति । परोपकारः आत्मना करणीयः इति इच्छन् राजा एतदपि इच्छति स्म यत् जनाः अपि परोपकारे प्रवृत्ताः भवेयुः इति । परोपकाराय उद्युक्तेन राज्ञा एव वञ्चना प्राप्ता इति जनैः यदि ज्ञायेत तर्हि ते परोपकारे प्रवृत्तिं न दर्शयेयुः इति चिन्तयन् राजा चोरम् अवदत् यत् एषा घटना कुत्रापि न प्रकाशनीया इति । अतः राज्ञः व्यवहारः सर्वथा औचित्यपूर्णः एव" इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं मौनेन वृक्षस्य शाखाम् अवलम्बितवान् ।






## रामायणस्य सन्ति त्रिशताधिकाः आवृत्तयः




रामायणं सर्वासु भारतीयासु भाषासु अपि अस्ति एव । बिली-सिन्थालीप्रभृतिषु वनजातीयभाषासु तुळुभाषायां चापि अस्ति एव तत् । संस्कृतभाषायाम् एव २५ विधानि रामायणानि सन्ति ! अन्नामीस्, बलिनीस्, काम्बोडियन्, चैनीस्, जवानीस्, लयोतिन्, मलय्, थाय्, टिबेटिन् इत्यादिषु भाषासु अपि तस्याः स्थितिः ज्ञापयति यत् दक्षिणपूर्वदेशेषु अपि तस्य जनप्रियता अधिका एव अस्ति इति । युरोपीयासु भाषासु अपि रामायणं दृश्यते एव । कश्चन इतिहासज्ञः प्रतिपादयति यत् रामायणे प्रतिपादिताः अंशाः कस्मिंश्चित् एकस्मिन् काले घटिताः न, प्रत्युत विभिन्नेषु कालेषु घटिताः घटनाः अत्र एकसूत्रीकृत्य लिखिताः इति ।

## विश्वपरम्परास्तरः प्राप्तः रेल्वेस्थानकेन

विश्वपरम्परास्तरः अधिगतः अस्ति मुम्बयीस्थेन छत्रपतिशिवाजिरेल्वेस्थानकेन । पश्चिमवङ्गराज्ये स्थितं दार्जीलिङ्गीयं रेल्वेस्थानकम् अपि एतादृशम् एव स्तरं वहति । छत्रपतिशिवाजिरेल्वेस्थानकं जगति एव अतिसम्मर्दोपेतं स्थानकम् इति श्रूयते । १७७८तमे वर्षे एतस्य निर्माणम् आरब्धम् । दशवर्षाभ्यन्तरे एतस्य निर्माणं समाप्तम् । तत्समये विक्टोरियाराज्ञ्याः स्मरणाय 'विक्टोरिया टर्मिनस्' इति तस्य नाम कृतम् । १९२९ तमे वर्षे १३ यानवेदिकाः (प्लाट्फार्म्स्) योजिताः । १९९६ तमे वर्षे पुनः यानवेदिकाद्वयं योजितम् । तस्मिन् एव वर्षे नामपरिवर्तनम् अपि कृतम् । प्रतिदिनं प्रायः ३,००० ००० जनाः अत्र गमनागमनं कुर्वन्ति ।



# समुद्रजलं किमर्थं लवणमयम् ?

बहोः कालात् पूर्वम् अरण्यसमीपे स्थिते ग्रामे उभौ सुहृदौ निवसतः स्म । सूजः यमारः चेति तयोः नाम । सूजः दृढकायः सुन्दरः च । यमारः न दुर्बलः, किन्तु नितराम् अलसः । यदि उन्नते वृक्षे फलानि दृश्यन्ते तर्हि वृक्षारोहणादिश्रमः सूजस्य । किन्तु उत्तमस्य फलस्य स्वीकारः तु यमारस्य ।

प्राप्तवयस्कतां गतवन्तौ तौ उभौ अपि



विवाहितौ जातौ । सूजः लघुनि कुटीरे निवसन् श्रमेण उदरं पूरयति स्म । यमारः तु उत्तमे गृहे वसति स्म । महती सम्पत्तिः आसीत् तस्य ।

सूजयमारयोः मैत्री तु अनुवर्तते स्म । यदा विरामः भवति तदा तौ अरण्यं प्रविशतः स्म । कदाचित् तौ एकां गुहां प्रविष्टवन्तौ । तत्र शोभमानान् कांश्चन शिलाखण्डान् अपश्यत् सूजः । सः तान् सङ्गृह्य गुहातः बहिः आगत्य यमाराय दर्शितवान् । यमारः तेषां दर्शनतः नितरां सन्तुष्टः । तथापि सः शान्ततया उक्तवान् - ''अहं श्वः नगरं गत्वा एतेषां किमपि मूल्यं स्याद्वा इति विचारयिष्यामि'' इति ।

यमारः तान् शोभमानान् शिलाखण्डान् स्वीकृत्य अनन्तरदिने नगरं गतवान् । तानि वस्तुतः रत्नानि आसन् । अतः तेषां विक्रयणतः प्रभूतं धनं प्राप्तं तेन । ग्रामं प्रत्यागत्य सूजाय कानिचन नाणकानि दत्त्वा सः अवदत् - ''मित्र ! ते च शिलाखण्डाः वस्तुतः किमपि मूल्यं न अर्हन्ति स्म । कश्चन धनिकः पुष्पकरण्डकस्य अलङ्करणाय तान् क्रीतवान् । ततः प्राप्तस्य अर्धभागः भवते दत्तम् अस्ति मया'' इति ।

रत्नानां विक्रयणतः प्राप्तेन धनेन नूतनं सुन्दरं भवनं निर्माय कांश्चन अश्वान् अपि क्रीतवान् यमारः । बहवः सेवकाः अपि कार्ये नियोजिताः तेन । ''पूर्वजैः निर्मिते गृहे निधिः प्राप्तः मया । ततः एतत्सर्वं कृतम्'' इति जनान् अवदत् सः ।

मित्रस्य प्रगतिं दृष्ट्वा सूजः नितरां सन्तुष्टः । किन्तु तस्य पत्नी निधिप्राप्तिविषये विश्वासं न कृतवती । सूजेन प्राप्ताः 'शिलाखण्डाः' एव

यमारस्य सम्पत्तेः कारणानि स्युः इति तस्याः चिन्तनम् आसीत् ।

कदाचित् सूजस्य पुत्रः अस्वस्थः जातः । तस्य चिकित्सार्थं सूजसमीपे धनं न आसीत् । अतः गुहायां पुनरपि शिलाखण्डाः प्राप्येरन् इति धिया सूजः गुहां प्रति गतवान् ।

तावता गुहां प्रविशन् यमारः तेन दृष्टः । ''किमत्र क्रियते ?'' इति अपृच्छत् सूजः ।

''एतेन मार्गेण गच्छन् आसम् । तदवसरे गुहा स्मृता । एवमेव अन्तः गन्तुम् उद्युक्तः'' इति उक्त्वा ''तदस्तु, भवता किमर्थम् अत्र आगतम् ?'' इति अपृच्छत् यमारः ।

''पुनरपि शिलाखण्डाः प्राप्येरन् इति धिया अहम् आगतः'' इति सत्यम् एव अवदत् सूजः ।

''आवाम् उभौ अपि सम्भूय शिलाखण्डम् अन्विष्याव । यदि ते प्राप्ताः स्युः तर्हि तान् नगरं नीत्वा अहमेव विक्रेष्ये । विक्रयणादिषु भवान् अपटुः । अतः योग्येन मूल्येन भवान् विक्रेतुं न शक्नुयात् कदाचित्'' इति उक्तवान् यमारः । ततः उभौ अपि अन्वेषणं कृतवन्तौ । किन्तु कुत्रापि किमपि न प्राप्तम् ।

ततः तौ गुहातः बहिः आगत्य गृहमार्गम् अनुसृतवन्तौ । ''वृष्टिलक्षणं दृश्यते'' इति वदन् यमारः वेगेन पदानि स्थापितवान् ।

मध्येमार्गं काचित् वृद्धा यमारम् अवदत् - ''वत्स ! काष्ठानाम् एतं बन्धं किं भवान् मम शिरसि आरोपयितुं शक्नुयात् ?'' इति । यमारः ताम् उपेक्षया दृष्ट्वा अग्रे गतवान् ।

''अम्ब ! एतं बन्धम् अहं भवत्याः गृहं प्रापयिष्यामि'' इति वदन् सूजः तं काष्ठबन्धं स्वस्य शिरसि आरोप्य वृद्धाम् अनुसरन् तं



बन्धं तस्याः गृहं प्रापितवान् ।

''वत्स ! भवान् नितरां दयालुः'' इति वदन्ती वृद्धा एकं रोटिकाखण्डं तस्मै दत्त्वा पुनः अवदत् - ''वत्स ! एतत् खादतु । तेन भवतः उदरं पूर्णं भविष्यति, भवतः शरीरे स्थिताः रोगाः अपगमिष्यन्ति च'' इति ।

तं रोटिकाखण्डं प्राप्य सूजः नितरां सन्तुष्टः । 'एतम् अस्वस्थाय मम पुत्राय दास्यामि' इति चिन्तयित्वा ततः निर्गतवान् सः ।

किञ्चिद्दूरं यदा गतं तदा मार्गपार्श्वे शिलाफलकस्य उपरि शयानः आसन्नमरणः कश्चित् तम् अवदत् - ''भोः मित्र ! अहं नितरां बुभुक्षितः



अस्मि । किं भवान् मह्यं किमपि खादितुं दातुं अर्हेत् ?'' इति । दयार्द्रहृदयः सूजः स्वसमीपे स्थितं रोटिकाखण्डं तस्मै दत्तवान् एव । तस्य खादनात् आसन्नमरणः उत्थाय उपविष्टवान् ।

''मित्र ! नितराम् उपकृतः अस्मि अहम् । एकम् उपायनं दीयते मया । दर्शनेन सामान्यम् अपि एतत् अस्ति अतिमहत्त्वपूर्णम्'' इति उक्त्वा वेणुनिर्मितम् एकं चक्रं सूजाय दत्तवान् सः । चक्रस्य एकः हस्तदण्डः अपि आसीत् । 'अपेक्षितं मनसि वदन् भवान् एतत् दक्षिणतः भ्रमयतु । तदा अपेक्षितं प्राप्यते । चक्रं वामतः भ्रमयतु । तेन वस्तूत्पत्तिः स्थगिता भवति । किन्तु सदा एतदेव न अवलम्बनीयं जीवनाय । परिश्रमजीवनं न त्यक्तव्यम् । उत्तमजीवनाय यावत् आवश्यकं तावत् यदा प्राप्यते तदा एतत् समुद्रे क्षेपणीयम्'' इति ।

सूजः तस्मै धन्यवादान् समर्प्य चक्रं गृहीत्वा गृहं प्रति प्रस्थितवान् ।

वेणुनिर्मितं चक्रम् अपेक्षितं दद्यात् इत्यत्र विश्वासः न आसीत् सूजस्य । अतः सः यमारस्य गृहं गत्वा अवदत् - ''मित्र ! मम पुत्रस्य चिकित्सार्थं किञ्चित् धनम् आवश्यकम्'' इति ।

''सूज ! किं करवाणि, मम समीपे एका वराटिका अपि नास्ति । भवतः साहाय्यं कर्तुं न शक्यते खलु इति नितरां विषीदामि अहम्'' इति कृत्रिमविषादं प्रदर्शयन् अवदत् यमारः ।

''अचिरात् एव अहं प्रत्यर्पयिष्यामि मित्र !'' इति अवदत् सूजः ।

''किं करवाणि ? यदि मत्समीपे धनं स्यात् तर्हि अवश्यं दद्याम्'' इति अवदत् यमारः ।

''भवतु । धने असति, भवान् कथं वा दद्यात् ?'' इति वदन् ततः निर्गतवान् सूजः ।

पितुः हस्ते स्थितं वेणुचक्रं दृष्ट्वा अस्वस्थः पुत्रः अपृच्छत् - ''तात ! कुतः आनीतम् एतत् ? किं वैशिष्ट्यम् एतस्य ?'' इति ।

''अपेक्षितम् आहारं दास्यति एतत् इति श्रूयते'' इति चक्रं दक्षिणतः भ्रमयन् अनासक्त्या अवदत् सूजः ।

क्षणाभ्यन्तरे तत्र विविधाः आहारपदार्थाः प्रत्यक्षाः जाताः । सूजः वामतः चक्रं भ्रमितवान् । वस्तूत्पत्तिः स्थगिता । सूजस्य पत्नी पुत्रः च एतत् आश्चर्येण दृष्टवन्तौ । पुत्रस्य चिकित्सार्थम् औषधं प्रार्थितवान् सूजः । औषधं प्राप्तम् एव । तस्य सेवनात् पुत्रः स्वस्थः जातः । तावता वृष्टिः आरब्धा । गृहं स्रवति स्म । अतः सूजः चक्रं दक्षिणतः भ्रमयन् अवदत् - 'उत्तमं गृहं प्राप्तं भवतु' इति । तादृशं गृहं

क्षणाभ्यन्तरे प्राप्तम् एव ।

सूजस्य अपूर्वं गृहं दृष्ट्वा ग्रामस्थाः सर्वे आश्चर्येण स्तब्धाः । यमारः तु स्वस्य नेत्रयोः एव विश्वासं न प्राप्तवान् । सः सूजम् अपृच्छत् – ''कथम् एतत् सम्पन्नम् ?'' इति ।

''सर्वं भगवतः दयया'' इति अवदत् सूजः ।

गच्छता कालेन सूजः उत्तमजीवनाय यद्यत् आवश्यकं तत्सर्वं प्राप्तवान् चक्रसाहाय्येन ।

एतत् दृष्टवतः यमारस्य चित्तशान्तिः विनष्टा, निद्रा चापि अपगता । एतस्याः ऐश्वर्य-प्राप्तेः कारणं ज्ञातुं सः रात्रौ सूजस्य गृहे पौनःपुन्येन दृष्टिं प्रसारयति स्म ।

एकस्यां रात्रौ चक्रं दक्षिणतः भ्रमयन् पुजार्थं मूर्तिं प्रार्थयमानः सूजः दृष्टः यमारेण । मूर्ति-प्राप्तेः अनन्तरं सूजः पत्नीम् अवदत् – ''समुद्रे चक्रस्य क्षेपणाय कालः सन्निहितः अस्ति । परिश्रममयं जीवनं कदापि न विस्मरणीयम् अस्माभिः'' इति ।

''भवतु'' इति अवदत् सुजस्य पत्नी ।

ऐश्वर्यादिप्राप्तिः चक्रप्रभावतः एव भवति इति अवगतवान् यमारः । सूजेन चक्रं कुत्र स्थाप्यते इत्यपि परिशीलितं तेन । अतः सः तत् चक्रं तस्यां रात्रौ चोरितवान् । अनन्तरदिने एव सः समीपस्थं द्वीपं प्रति नौकया प्रस्थित-वान् । 'द्वीपे उत्तमं भवनं प्राप्य पत्नीपुत्रादिभिः सह वैभवोपेतं जीवनं करणीयम्' इति चिन्तनम् आसीत् यमारस्य ।

प्रस्थानसमये आत्मना सह किञ्चित् आहारम् अपि नीतवान् आसीत् सः । घण्टां यावत् प्रयाणस्य अनन्तरं बुभुक्षा प्राप्ता तेन । अतः सः आहारसेवनम् आरब्धवान् । तदा तेन ज्ञातं यत् पाचकः पाके लवणयोजनम् एव विस्मृतवान् इति । सः चक्रं भ्रमयन् मनसि अवदत् – 'लवणम् आवश्यकम्' इति । ततः लवणोत्पत्तिः आरब्धा । नौका समग्रा लवणराशिना पूर्णा । किन्तु लवणोत्पत्तिस्थगनं कथम् इति यमारः न जानाति स्म । लवणभाराधिक्यात् नौका जले निमग्ना । नाविकौ कथमपि तरणं कृत्वा तीरं प्राप्तवन्तौ । तरणम् अजानन् यमारः समुद्रे निमग्नः सन् प्राणैः वियुक्तः जातः ।

चक्रं तु निरन्तरं लवणम् उत्पादयति स्म एव । अतः समुद्रस्य जलं लवणमयं जातम् । अद्यापि तत्र लवणस्य उत्पत्तिः निरन्तरं प्रवर्तते । वृष्टिजलसमावेशात् लवणांशता प्रतिवर्षं किञ्चित् न्यूना भवति ।

एतदेव समुद्रस्य लवणमयतायाः कारणम् ।



# वार्ताविशेषः

## सरीसृपसेविनः नाम गिन्नीस्पुस्तके

चीनदेशीयानाम् आहारे कीटसरीसृपादयः अपि अन्तर्भवन्ति इति प्रायः सर्वे जानन्ति एव । भारतीयेनापि केनचित् तादृशः एव आहारः सेव्यते । तस्य नाम सि. मनोहरः इति । चेन्नैसमीपे ताम्बरम्प्रदेशे तस्य वासः । गिन्नीस्पुस्तके स्वनाम्नः योजनाय सः ३० कलाभ्यन्तरे दश से.मी. दीर्घान् २०० किञ्चुलकान् खादितवान् । गतेषु त्रिषु वर्षेषु मया कीटः सरीसृपः वा न खादितः इति वदति सः । ततः पूर्वम् ... ? ततः पूर्वं तु तस्य दैनन्दिनाहारस्य अङ्गभूताः आसन् ते । तस्य नाम 'सर्पीयः मनोहरः' इति । एतत् नाम तेन कथं प्राप्तम् इति ? सः सरीसृपान् (क्वचित् सर्पान् अपि) नासारन्ध्रेण अन्तः प्रेषयित्वा मुखेन बहिः आनयति स्म । तस्य वयः इदानीं २६ वर्षाणि ।

## पत्रवितारकयोः नियतम् अन्यदेशगमनम्

नाथूलः भारतचीनदेशयोः मध्ये स्थितं १४५०० पादौन्नत्योपेतं पर्वतम् अतिक्रम्य गतः आसीत् । एतस्मिन् पर्वतप्रदेशे सर्वे सर्वदा गन्तुं नार्हन्ति । एतस्य कश्चन अपवादः अस्ति । प्रतिभानुवासरं 'यि'नामकः चीनदेशीयः पत्रवितारकः पत्रस्यूतम् आनीय भारतभूमौ स्थापयित्वा रिक्तहस्ततया वेगेन प्रतिगच्छति निमेषत्रयाभ्यन्तरे । प्रतिगुरुवासरं भारतीयः पत्रवितारकः बहादुरसिंहः चीनभूमिं प्रति गत्वा पत्रस्यूतं निक्षिप्य निमेषत्रयाभ्यन्तरे प्रत्यागच्छति । तयोः उभयोः समीपे अपि विदेशयात्रासम्बद्धं पारपत्रं तु नास्ति । तथापि तौ नियततया अन्यदेशस्य भूमिं गत्वा आगच्छतः । किन्तु एतदस्ति उद्योगाङ्गतया ।



# आन्ध्रप्रदेशीया जानपदकथा

## राजकुमारः उज्जीवितः जातः

स्वप्नसुन्दरी राज्ञः महेन्द्रवर्मणः पुत्री । राजा मरणात् पूर्वं स्वस्य सप्तानाम् अपि पुत्राणां विवाहं निर्वर्तितवान् आसीत् । किन्तु पुत्र्याः विवाहस्य निर्वर्तनात् पूर्वम् एव सः दिवं गतः । ततः अचिरात् एव महाराज्ञी अपि दिवं गता ।

स्वप्नसुन्दर्याः भ्रातरः तस्यां विशेषप्रीतिमन्तः आसन् । किन्तु तेषां पत्न्यः तस्यै असूयन्ति स्म । अतः तां कर्मकरीं भावयन्ति स्म ताः । विना कारणं तस्याः व्यवहारे दोषः दृश्यते स्म ताभिः । पौनःपुन्येन तां निन्दन्ति स्म अपि ताः । अतः प्रासादे निवसन्त्याः अपि



स्वप्नसुन्दर्याः जीवनं शोचनीयं जातम् । तथापि सा अग्रजान् एकम् अपि आक्षेपवचनं न उक्तवती ।

स्वस्य गृहे एव जायमानम् अपमानं सोढुम् अशक्ता सा कदाचित् भ्रातृजायानां पुरतः उक्तवती – ''अत्र यद्यत् प्रवर्तते तत्सर्वम् अहं मम भ्रातॄन् निवेदयिष्यामि'' इति । तस्मिन् दिने तस्याः भ्रातरः प्रासादे न आसन् । अतः 'एषः एव सुसमयः' इति चिन्तयन्त्यः ताः भ्रातृजायाः – ''भवती इतः निर्गच्छतु । इतःपरं प्रासादे वासाय नास्ति अवकाशः भवत्यै'' इति उक्त्वा तां प्रासादात् निर्दयं बहिः प्रेषितवत्यः ।

''अस्तु । इतः गमिष्यामि अहम् । कञ्चित् राजकुमारं परिणीय एव प्रत्यागमिष्यामि'' इति अवदत् राजकुमारी ।

''भवतु । राजकुमाराः भवत्याः परिणयाय पङ्क्तिशः स्थिताः सन्ति खलु ? तेष्वेव कञ्चित् परिणयतु । यदि शक्यते तर्हि चन्दनराजम् एव परिणेतुम् अपि अर्हति भवती'' इति उपहासपूर्वकम् उक्तवत्यः भ्रातृजायाः ।

स्वप्नसुन्दरी ततः प्रस्थिता । तावता कनिष्ठा भ्रातृजाया तस्याः समीपम् आगत्य – ''एतं वस्त्रबन्धं नयतु । विवाहावसरे एतानि वस्त्राणि भवत्याः उपयोगाय भवेयुः अपि

कदाचित् । एतं तण्डुलबन्धम् अपि नयतु । चन्दनराजं भोजयितुम् एतम् उपयोक्तुम् अर्हति भवती'' इति उक्त्वा वस्त्रबन्धं तण्डुलबन्धं च तस्यै दत्तवती । अन्याः भ्रातृजायाः दूरादेव एतत् पश्यन्त्यः हसितवत्यः ।

स्वप्नसुन्दरी अग्रे गतवती । 'चन्दनराजः' इति एकमेव पदं तस्याः मनोभित्तौ स्थितम् आसीत् । तादृशं नाम तया इतः पूर्वं न श्रुतम् आसीत् । 'सः राजकुमारः मया द्रष्टव्यः एव, तेन सह सम्भाषणीयम् अपि' इति सङ्कल्पितवती सा ।

तावता काश्चन महिलाः तस्याः अभिमुखम् आगताः । सा ताः पृष्टवती - ''अयि भगिन्यः ! चन्दनराजः कुत्र द्रष्टुं शक्यः इति किं भवत्यः जानन्ति ?'' इति ।



तदा तासु काचित् उक्तवती - ''चन्दनराजः ? स तु बहोः कालात् पूर्वम् एव मृतः'' इति ।

''सः किं राजा आसीत् ? कस्य राज्यस्य राजा आसीत् सः ?'' इति अपृच्छत् स्वप्नसुन्दरी ।

''सः तु दक्षिणस्य कस्यचित् देशस्य राजा आसीत् इति एतावत् एव जाने'' इति उक्त्वा अग्रे गतवती सा ।

स्वप्नसुन्दरी दक्षिणदिशम् अनुसृतवती । बहूनि दिनानि यावत् प्रयाणं कृतं तया । तया किञ्चन अरण्यं प्राप्तम् । तस्मिन् अरण्यप्रदेशे एकः विशालः प्रासादः दृष्टः तया । आश्चर्यम् अनुभवन्ती सा भवनपरिसरे सर्वत्र दृष्टिं प्रसारितवती । न कोऽपि दृष्टः तया ।

प्रासादस्य द्वारम् अपिहितम् एव आसीत् । सा धैर्यं प्राप्य अन्तः गतवती । भवनस्य पुरोभागे स्थिते प्रकोष्ठे तया कश्चन शुनकः मार्जारः च दृष्टौ । 'एतयोः पालकः कः स्यात् ? सः कुत्र स्यात् ?' इति चिन्तयन्ती परितः अपश्यत् स्वप्नसुन्दरी । शुनकस्य भषणं मार्जारस्य म्यावँकारः च ताम् अजागरयत् । 'एतौ बुभुक्षितौ स्तः' इति अवगतवती स्वप्नसुन्दरी तण्डुलबन्धतः तण्डुलान् निष्कास्य तयोः पुरतः पातितवती । ताभ्याम् इतः पूर्वं तण्डुलः न खादितः एव आसीत् । यतः तयोः स्वामी सदा तयोः कृते मानवमांसम् एव ददाति स्म । अतः महता उत्साहेन तण्डुलः खादितः ताभ्याम् ।

तण्डुलं खादितवान् शुनकः अन्तः गत्वा एकं लघुबन्धम् आनयत्, स्वप्नसुन्दरीम् अवदत् च - ''मह्यम् इतोऽपि किञ्चित् तण्डुलः



यदि दीयेत तर्हि अहम् एतं रक्तचूर्णबन्धं भवत्यै दद्याम्'' इति ।

आश्चर्यम् अनुभवन्ती स्वप्नसुन्दरी तम् अपृच्छत् – ''किं वा वैशिष्ट्यम् एतस्य चूर्णस्य ?'' इति ।

''यया एतत् चूर्णं तिलकत्वेन ध्रियते तस्याः पतिः दीर्घकालं जीविष्यति । अविवाहिता एतत् चूर्णं यदि धरति तर्हि सा अभिलषितं पतिम् अचिरात् एव प्राप्स्यति'' इति अवदत् सः शुनकः ।

स्वप्नसुन्दरी पुनरपि कांश्चन तण्डुलकणान् शुनकस्य पुरतः स्थापितवती । ततः तत् रक्तचूर्णं स्वीकृत्य ललाटे धृतवती च ।

एतदवसरे मार्जारः अपि अन्तः गत्वा चूर्णबन्धं कञ्चित् आनीय स्वप्नसुन्दरीम् अवदत् – ''एतत् चूर्णं स्वीकृत्य मह्यम् अपि अधिकं तण्डुलं ददातु'' इति ।

''किं वा वैशिष्ट्यम् एतस्य चूर्णस्य ?'' इति अपृच्छत् स्वप्नसुन्दरी ।

''यदि एतत् अञ्जनत्वेन नेत्रयोः ध्रियते तर्हि अदृश्यता प्राप्यते, किन्तु सर्वं द्रष्टुं तु शक्यते'' इति अवदत् मार्जारः ।

''एतत् त्रिशालं भवनं कस्य ?'' इति पृष्टवती स्वप्नसुन्दरी ।

तदा तौ उक्तवन्तौ – ''एतत् भवनं कस्यचन राक्षसस्य । अरण्यमार्गेण गच्छतः जनान् मारयित्वा खादन् सः जीवति । आवयोः कृते अपि मनुष्यमांसम् एव खादनाय ददाति सः । अतः तण्डुलः इतः पूर्वं न खादितः एव आसीत् आवाभ्याम् । राक्षसस्य प्रत्यागमनात् पूर्वं भवत्या इतः निर्गन्तव्यम् । अन्यथा सः भवतीं मारयेत्'' इति ।

स्वप्नसुन्दरी स्वसमीपे स्थितं तण्डुलं तयोः कृते समर्प्य वेगेन ततः निर्गतवती । सा राक्षसेन कथमपि न दृष्टा । अरण्यम् अतिक्रम्य सा वृक्षबहुलं प्रदेशं प्राप्तवती । 'अन्धकार-प्रसारात् पूर्वम् एव एतं प्रदेशम् अतिक्रम्य कमपि ग्रामं प्राप्य मया अद्य रात्रौ वासः करणीयः' इति चिन्तितवती सा वेगेन पदानि स्थापितवती । ततः अनतिदूरे एव तया कश्चन दीपप्रकाशः दृष्टः ।

स च प्रकाशः कस्माच्चित् प्रासादसदृशात् भवनात् आगच्छति स्म । आश्चर्यम् अनुभवन्ती सा तत् भवनं प्रविष्टवती । तस्य अन्तः कोऽपि न दृष्टः तया । भवने बहवः प्रकोष्ठाः आसन् ।

किन्तु कुत्रापि कोऽपि न आसीत् ।

भवनस्य मध्यभागे तया किञ्चन विशालं, सभाङ्गणं दृष्टम् । तत्र कञ्चन विशालं वृक्षं, तस्य अधः काञ्चित् वेदिकां च दृष्टवती सा । वेदिकायां शयानः कश्चन सुन्दरः तरुणः अपि दृष्टः तया । सः निश्चलतया शयितः आसीत् । सजीवलक्षणं किमपि न दृष्टं तस्मिन् । सः मृतः इव अपि न भासते स्म । 'अत्र किं प्रवर्तते इति द्रष्टव्यम् एव' इति निश्चित्य सा ततः अनतिदूरे कोणे उपविष्टवती । तत्र यद्यत् प्रवर्तेत तत्सर्वं कौमुदीप्रकाशे तया स्पष्टतया द्रष्टुं शक्यम् आसीत् ।

मध्यरात्रे तस्मिन् तरुणस्य शरीरे स्पन्दः दृष्टः । मन्दम् उत्थाय नेत्रे मार्जयन् सः स्वगतम् इव अवदत् - ''विद्याधरि ! विद्याधरि ! किमर्थम् इतोऽपि न आगतं भवत्या ?'' इति ।



''अत्र विद्याधरी काऽपि नास्ति'' इति अवदत् स्वप्नसुन्दरी ।

बाह्या काचित् उपस्थिता अस्ति इति ज्ञातवान् सः तरुणः अपृच्छत् - ''का भवती ? कुतः आगतं भवत्या ? कथं भवती अत्र आगता ?'' इति ।

तदा स्वप्नसुन्दरी तस्य समीपं गत्वा अवदत् - ''मम नाम स्वप्नसुन्दरी इति । अहं काचित् राजकुमारी । मम सप्त भ्रातरः सन्ति । मम भ्रातृजायाः मां गृहात् निष्कासितवत्यः । अतः अहम् अनाथा जाता अस्मि । चन्दनराजस्य अन्वेषणाय मया उद्युक्तम् । तमेव परिणेतुम् इच्छामि अपि अहम्'' इति ।

''अहमेव चन्दनराजः नाम । अहमपि राजकुमारः एव । किन्तु भवती मां परिणयेत् वा न वा इति मम महान् सन्देहः । यतः दिने अहं मृतः भवामि । मध्यरात्रे काश्चन घण्टाः सजीवं तिष्ठामि च'' इति अवदत् राजकुमारः ।

''राजकुमार ! भवता 'विद्याधरी' इति उक्तम् । का सा विद्याधरी नाम ?'' इति अपृच्छत् सुन्दरी ।

''सा च महती काचित् कथा । यद्यपि वक्तव्यं बहु अस्ति, तथापि सङ्ग्रहेण वदामि । अन्यथा अग्रिमरात्रिपर्यन्तं भवत्या प्रतीक्षणीयं भवेत्'' इति उक्त्वा क्षणकालं विरम्य सः पुनः अवदत् - ''मम पिता बहूनि वर्षाणि यावत् निस्सन्तानः आसीत् । कदाचित् सः मृगयाप्रयाणसमये मार्गभ्रष्टः सन् एकं कुटीरं प्राप्तवान् । रात्रौ तेन तत्रैव वासः



विद्याधरीः दृष्टवान् । तासु काचित् मां परिणेतुम् इच्छति स्म, आत्मना सह विद्याधर-लोकं नेतुम् इच्छति स्म अपि । मया एतत् निराकृतम् । अतः सा मम कण्ठे स्थितं चन्दन-हारम् अपहृत्य ततः निर्गतवती । अनन्तरक्षणे एव अहं जीवहीनः जातः । ततः मम पित्रा हारस्य अन्वेषणं सर्वत्र कारितम् । किन्तु केन सः हारः नीतः इति तु सर्वथा न ज्ञातम् । पितरौ मम शरीरस्य नाशं न कृतवन्तौ । हारः कदाचित् वा प्राप्येत एव, तदा पुत्रः उज्जीवितः भवेत् इति तयोः आशा आसीत् ।

ततः तौ अत्र एतं प्रासादं निर्माय सभाभवने मम शरीरं स्थापितवन्तौ । प्रतिसप्ताहम् एकवारम् अत्र आगत्य अश्रूणि स्रावयित्वा प्रतिगच्छतः तौ । तौ न जानीतः यत् विद्याधरी मम हारं नीतवती अस्ति इति'' इति ।

यावत् तरुणः स्वकथां समापितवान् तावता उषःकालः आसन्नः इव । तस्मात् सः नितरां श्रान्तः । सः वेदिकायां शयनम् अकरोत् । क्षणाभ्यन्तरे सः जीवरहितः अपि जातः । 'अग्रिममध्यरात्रपर्यन्तम् अपि मया अत्र स्थातव्यम्' इति सङ्कल्पितवती स्वप्नसुन्दरी ।

कृतः । अनन्तरदिने प्रातः तत्रत्यः मुनिः तस्मै एकं चन्दनहारं दत्त्वा – 'एतत् राज्ञ्यै दत्त्वा तां वदतु यत् एतत् धर्तव्यम् इति । एषः हारः जीवदाने समर्थः । हारधरणेन भवतः पत्नी सद्योजातं शिशुं प्राप्स्यति । एषः हारः तस्य शिशोः शरीरात् यथा कदापि न अपगच्छेत् तथा विशेषावधानं दातव्यं भवता राज्ञ्या च' इति अवदत् ।

राजा प्रासादं प्रतिगत्य राज्ञ्यै हारं दत्तवान् । राज्ञी तं धृतवती । ततः सद्योजातः शिशुः ताभ्यां प्राप्तः । शिशोः कण्ठे यदा हारः स्थापितः तदा शिशुः उज्जीवितः जातः । सः एव अहम् । मम नाम चन्दनराजः इति कृतम् । अहं प्रवृद्धः अभवम् । कदाचित् मध्यरात्रे चन्द्रशालायां शयानः अहं मां परितः नृत्यन्तीः

अनन्तरदिने मध्याह्नकाले राजा राज्ञी च तं प्रासादम् आगत्य पुत्रस्य शरीरस्य पुरतः उपविश्य किञ्चित्कालम् अश्रूणि स्रावयित्वा प्रतिगतौ । स्वप्नसुन्दरी श्वेतं चूर्णं स्वस्य नेत्रयोः लेपयित्वा अदृश्या सती सर्वम् अपि अपश्यत् ।

मध्यरात्रे चन्दनराजः सजीवः जातः । ''सुन्दराङ्ग ! विद्याधर्यः पुनः कदा अत्र आगच्छेयुः ? अहं विद्याधरीतः तं चन्दनहारं

वशीकर्तुम् अवश्यं प्रयत्नं करिष्यामि । अहम् अदृश्यताप्राप्तिं जानामि इत्यतः कथमपि तं हारं प्रतिप्राप्स्यामि एव'' इति अवदत् स्वप्नसुन्दरी ।

यावत् चन्दनराजः किमपि वक्तुम् उद्युक्तः तावता सुमधुरं सङ्गीतं श्रुतं, किङ्किणीनादः अपि श्रुतः । ''विद्याधर्यः आगच्छन्त्यः सन्ति । तासु धूसरपक्षयुक्ता एव मम चन्दनहारस्य अपहर्त्री'' इति उक्त्वा चन्दनराजः वेदिकायां शयनम् अकरोत् ।

विद्याधर्यः वेदिकां परितः भ्रमन्त्यः नृत्यं कृतवत्यः । धूसरपक्षयुक्ता विद्याधरी चन्दनराजस्य समीपं गत्वा अपृच्छत् - ''अयि भोः, किं मां न परिणयसि ?'' इति ।

''मया असकृत् उक्तं खलु - यदि भवती अत्र वसेत् तर्हि अहं भवतीं परिणयेयम् इति । किम् अत्र वासं कर्तुं सिद्धा भवती ?'' इति अपृच्छत् चन्दनराजः ।

''विद्याधरराज्यात् अन्यत्र मम वासः सर्वथा असम्भवः'' इति उक्त्वा वेदिकातः अधः आगता सा विद्याधरी । तावता अदृश्यरूपेण स्थितया स्वप्नसुन्दर्या घट्टिता सती सा भूमौ अपतत् । तदवसरे स्वप्नसुन्दरी तस्याः कण्ठतः चन्दनहारं निष्कास्य स्वीकृतवती ।

विद्याधर्याः स्पर्शस्य कारणतः स्वप्नसुन्दर्याः अदृश्यताशक्तिः अपगता । अतः सा विद्याधरीणां दृष्टिगोचरतां गता । ''हा हन्त ! वयं मानवजातीयया दृष्टाः अभवाम'' इति वदन्ती अन्याभिः सह अदृश्या जाता धूसरपक्षोपेता विद्याधरी ।

सुन्दरी तं हारं चन्दनराजस्य कण्ठे स्थापितवती । तदा सजीवतां प्राप्य उत्थितः चन्दनराजः स्वप्नसुन्दर्याः हस्तं गृहीत्वा - ''सुन्दरि ! भवत्या अहं पुनरुज्जीवितः । एतां वार्तां ज्ञात्वा मम मातापितरौ नितरां सन्तुष्टौ भवेताम् । आगच्छतु, तत्र गच्छाव तावत्'' इति अवदत् ।

तौ चन्दनराजस्य राज्यं गतवन्तौ । राजा राज्ञी च तयोः दर्शनात् नितरां सन्तुष्टौ । स्वप्नसुन्दरी एव चन्दनराजस्य उज्जीवनस्य कारणीभूता इति ज्ञातवतोः तु तयोः आनन्दस्य सीमा एव न आसीत् । तौ स्नुषात्वेन तस्याः स्वीकारं सहर्षम् अङ्गीकृतवन्तौ ।

ततः योग्ये मुहूर्ते चन्दनराजस्वप्नसुन्दर्योः विवाहः सवैभवं सम्पन्नः ।

विवाहानन्तरं तौ दम्पती अरण्यस्थं प्रासादम् एव प्रतिगत्य सुखेन जीवनं यापितवन्तौ ।





# कुबेरसरोवरः

ब्रह्मदत्तः यदा काशीराज्यं पालयन् आसीत् तदा बोधिसत्त्वः तस्य पुत्ररूपेण जन्म प्राप्तवान् । तस्य नाम निश्चितं - महाशासनः इति । तस्य जन्मनः द्वित्राणां वर्षाणाम् अनन्तरं राज्ञी अपरं पुत्रं प्रसूतवती । तस्य नाम सोमदत्तः इति जातम् ।

तयोः जन्मनः अनन्तरं द्वित्रवर्षाभ्यन्तरे राज्ञी दिवं गता । अतः राजा अन्यां परिणीतवान् । केषाञ्चित् मासानाम् अनन्तरं सा अपि पुत्रं प्रसूतवती । तस्य नाम निश्चितम् - आदित्यः इति । पुत्रोत्सववार्तां श्रुत्वा राजा राज्ञीम् अवदत् - "एतस्मिन् शुभावसरे भवती यत् इच्छति तत् दास्यामि । किमपि याचताम्" इति ।

"इदानीं किमपि मास्तु । वरम् अग्रे कदाचित् अहं याचिष्यामि" इति अवदत् राज्ञी ।

आदित्यः सर्वाः राजोचितविद्याः अधीतवान् । यदा आदित्यः तरुणः जातः तदा राज्ञी राजानम् अवदत् - "आदित्यस्य जन्मकाले भवता वरः दत्तः आसीत् । तं वरम् इदानीम् अहं याचामि । आदित्यः युवराजरूपेण अभिषिक्तः भवेत् इति मम अपेक्षा" इति ।

राज्ञ्याः एताम् अपेक्षां श्रुत्वा राजा निश्चेष्टः जातः । क्षणकालं विचिन्त्य सः अवदत् - "ज्येष्ठयोः पुत्रयोः सतोः, तृतीयस्य युवराजपदे अभिषेकः परम्पराविरुद्धः स्यात् । भवत्याः अपेक्षा न्यायसङ्गता नास्ति" इति ।

किन्तु राज्ञी स्वस्य अपेक्षां परित्यक्तुं परिवर्तयितुं वा न सिद्धा । सा पुनः पुनः एतं विषयं राजानं सानुरोधं वदति स्म । एतत् दृष्ट्वा राजा अचिन्तयत् यत् एषा ज्येष्ठयोः राजकुमारयोः हानिम् अपि कुर्यात् कदाचित् इति । अतः सः ज्येष्ठयोः संरक्षणाय उपायं बहुधा अचिन्तयत् ।

कदाचित् सः ज्येष्ठौ पुत्रौ स्वसमीपम् आहूय परिस्थितिं सूक्ष्मतया निवेद्य अवदत् - "भवद्भ्यां कानिचन वर्षाणि राज्यात् बहिः स्थातव्यम् । मम दिवङ्गतेः अनन्तरं भवन्तौ

एव राज्यस्य उत्तराधिकारिणौ भविष्यतः । अतः तत्काले आगत्य राज्यं स्वीक्रियताम् । तावत् राज्ये कदापि न स्थातव्यम्'' इति ।

पितुः इच्छायाः अनुसारं महाशासनः सोमदत्तः च नगरं परित्यज्य राज्यसीमाम् अपि अतिक्रान्तौ । तावता तौ अनुसरन् आगतः आदित्यः ताभ्यां दृष्टः । ततः ते त्रयः अपि मिलित्वा हिमालयस्थम् अरण्यं गतवन्तः ।

कदाचित् ते त्रयः अपि प्रयाणश्रमस्य निवारणाय कस्यचित् वृक्षस्य अधः उपविष्टवन्तः । महाशासनः आदित्यम् अवदत् - ''भ्रातः ! तत्र कश्चन सरोवरः दृश्यते । तत्र गत्वा आदौ स्वयं जलं पीत्वा कमलपत्रेण आवयोः कृते अपि जलम् आनयतु'' इति ।




आदित्यः सरोवरसमीपं गत्वा जलं यावत् स्पृष्टवान् तावता कश्चन जलराक्षसः तं गृहीत्वा आकृष्य जलस्य अधः स्थितं स्वगृहं प्रति नीतवान् । दीर्घः कालः अतीतः चेदपि आदित्यः न प्रत्यागतः इत्यतः चिन्तां प्राप्तवान् महाशासनः सोमदत्तं प्रेषितवान् आदित्यस्य अन्वेषणाय । तम् अपि जलपिशाचः गृहीतवान् ।

द्वितीयस्यापि अनुजस्य अप्रत्यागमनं दृष्ट्वा महाशासनः खड्गं गृहीत्वा स्वयमेव अनुजयोः अन्वेषणाय प्रस्थितवान् । सरोवरतीरं प्राप्य दूरादेव जलं परीक्षादृष्ट्या अपश्यत् सः । एतत् दृष्टवान् जलपिशाचः अवगतवान् यत् अन्ये इव एषः अविचार्य जलस्पर्शं न करिष्यति इति । अतः सः व्याधवेषं धृत्वा महाशासनसमीपं गत्वा अवदत् - ''किमर्थम् एवं तीरे स्थितम् ? यदि पिपासा स्यात् तर्हि सरोवरे पादौ निधाय जलं पीयताम्'' इति ।

तस्य व्यवहारे सन्देहं प्राप्तवान् महाशासनः अवदत् - ''भवतः व्यवहारस्य दर्शनात् भासते यत् भवान् एव मम भ्रातरौ अदृश्यौ कृतवान् स्यात् इति'' इति ।

''भवान् विवेकी इव भासते । अतः सत्यम् एव वदामि । एतं सरोवरम् आगतान् सर्वान् अहं बन्दीकरोमि, ऋते ज्ञानिभ्यः । एवं करणीयम् इति कुबेरेण एव अहम् आज्ञप्तः अस्मि'' इति अवदत् जलपिशाचः ।

''एतस्य तात्पर्यं यत् भवान् ज्ञानिभ्यः उपदेशं प्राप्तुम् इच्छति इति । उपदेशदानेन अहं भवन्तम् अनुग्रहीतुं शक्नुयाम् । किन्तु इदानीं तु श्रान्तः अस्मि'' इति अवदत् महाशासनः ।

जलपिशाचः तं स्वस्य निवासं नीतवान् ।

तं यथायोग्यं सत्कृत्य उचितम् आसनं कल्पितवान् । तस्य पादसमीपे उपविश्य तदीयस्य उपदेशस्य श्रवणाय उद्युक्तः जातः च ।

आचार्यतः यत् यत् ज्ञातम् आसीत् तत्सर्वं जलपिशाचं बोधितवान् महाशासनः । सर्वस्य श्रवणस्य अनन्तरं जलपिशाचः व्याधरूपं परित्यज्य जलपिशाचरूपेण एव तिष्ठन् अवदत् – ''महाशय ! अहं भवतः सहोदरयोः अन्यतरं बन्धविमुक्तं कर्तुम् इच्छामि । कस्य बन्धमोक्षः भवतु ?'' इति ।

''आदित्यस्य एव बन्धनतः मोक्षः भवतु'' इति उक्तवान् महाशासनः ।

''अग्रजे उपेक्षा किम् एषा धर्मसम्मता ?'' इति अपृच्छत् जलपिशाचः ।

''अत्र अधर्मस्य प्रसक्तिः एव नास्ति । मम मातुः पुत्रयोः अहं सजीवः अस्मि । विमातुः एकः पुत्रः अपि सजीवं तिष्ठेत् खलु ? मम विमाता स्वपुत्रस्य आदित्यस्य निमित्तं राज्यं प्रार्थितवती आसीत् । पितुः आज्ञायाः अनुगुणम् एव आवाम् अरण्यं प्रति आगच्छाव । भ्रातृप्रेम्णा प्रेरितः सन् आदित्यः आवयोः अनुसरणं कृतवान् । यदि ज्येष्ठौ आवां राजधानीं प्रतिगच्छेव तर्हि जनाः पृच्छेयुः खलु – आदित्यः क्व इति ? जलपिशाचः तं गृहीतवान् इति आवयोः कथनं किं युक्तिसङ्गतं भवेत् ?'' इति अवदत् ।

तदा जलपिशाचः महाशासनं साष्टाङ्गं नमस्कृत्य – ''आर्य ! भवादृशः ज्ञानी मया अद्यावधि अन्यः न दृष्टः एव । भवतः उभौ अपि अनुजौ मोचयिष्यामि । यावत् इच्छा तावत् भवन्तः मम अतिथित्वेन अत्र वासं कर्तुम् अर्हन्ति'' इति अवदत् ।

महाशासनः तदनुजौ च जलपिशाचस्य आतिथ्यं प्राप्नुवन्तः तत्रैव वासं कृतवन्तः । अचिरात् एव तैः वार्ता प्राप्ता यत् राजा ब्रह्मदत्तः दिवं गतः इति ।

एतस्याः वार्तायाः श्रवणस्य समनन्तरम् एव महाशासनः अनुजाभ्यां जलराक्षसेन च सह काशीराज्यं प्रत्यागतवान् ।

महाशासनस्य पट्टाभिषेकः प्रवृत्तः । सः सोमदत्तं मन्त्रिस्थाने, आदित्यं सेनापतिस्थाने च नियुक्तवान् । उपकारं कृतवते जलराक्षसाय एकं सुन्दरं भवनं दत्तं तेन । तस्य सेवायै बहवः सेवकाः अपि तेन नियुक्ताः ।





# विष्णुपुराणम्

सुग्रीवः किष्किन्धायाः राजा जातः । सः अङ्गदं युवराजपदे अभिषिच्य तस्मै राजकार्याणि समर्प्य स्वयं सुखभोगादिषु निमग्नः जातः । रामाय यत् वचनं दत्तं तत् सर्वथा विस्मृतवान् सः । तदा लक्ष्मणः धनुर्बाणादिकं गृहीत्वा किष्किन्धाम् आगतः । हनूमान् सुग्रीवं बोधितवान् यत् श्रीरामस्य कार्यस्य अविलम्बेन सम्पादनम् अस्माकम् आद्यं कर्तव्यम् इति ।

सुग्रीवः सीतायाः अन्वेषणाय वानरान् सर्वासु दिक्षु प्रेषितवान् । अङ्गदः, हनुमान्, जाम्बवान् च दक्षिणस्यां दिशि प्रस्थितवन्तः । तदा रामः हनूमते मुद्राङ्गुलीयकं दत्त्वा अवदत् यत् अभिज्ञानाय एतत् सीतायै दीयताम् इति ।

वानराः सीतायाः अन्वेषणं कुर्वन्तः दक्षिणसमुद्रस्य तटं प्राप्तवन्तः । 'रावणेन सीता कुत्र स्थापिता इति केनापि न ज्ञायते' इति ते यावत् चिन्तयन्तः आसन् तावता जटायुषः अग्रजः सम्पातिः तेषां खादनाय तत्र आगतः ।

पूर्वं कदाचित् जटायुस्सम्पात्योः स्पर्धा प्रवृत्ता यत् केन सूर्यमण्डलं स्प्रष्टुं शक्यते इति द्रष्टव्यम् इति । ततः उभौ अपि उड्डयनम् आरब्धवन्तौ । मध्येमार्गं जटायुः क्षीणशक्तिः जातः । तस्य पक्षौ सूर्यतापं सोढुम् असमर्थौ जातौ । तदा सम्पातिः तदुपरि स्थितवान् । तेन छायां प्राप्तवतः जटायुषः पक्षयोः दाहः निवारितः जातः, किन्तु सम्पातेः पक्षौ दग्धौ जातौ । एवं दग्धपक्षः सम्पातिः समुद्रतीरे निवसन् तत्र आगच्छतः प्राणिनः खादन् उदरं पूरयति स्म ।

वानराणां वार्तालापतः सम्पातिः जटायुषः मरणं, सीतारक्षणाय तेन कृतं प्रयत्नं च ज्ञातवान् । सः स्वस्य उपरि हनूमन्तम् आरोप्य समुद्रस्य अपरस्मिन् तीरे स्थितं लङ्काद्वीपं



दर्शितवान् । लङ्का तु ततः शतयोजनदूरे आसीत् । तावद्दूरं गन्तुं कस्य वा सामर्थ्यं स्यात् इति चिन्तां प्राप्तवन्तः सर्वे वानराः ।

भवता स्वशक्तिः विस्मृता भवतु इति ऋषयः हनूमते शापं दत्तवन्तः आसन् । एतम् अंशं जाम्बवान् जानाति स्म । सः एतम् अंशं स्मारयन् अवदत् – "भोः आञ्जनेय ! भवान् विशेषप्रयासं विना एव समुद्रलङ्घनं कृत्वा सीतान्वेषणकार्यं साधयितुम् अर्हति" इति ।

एतत् श्रुत्वा प्राप्तशक्तिः हनूमान् श्रीरामं स्मृत्वा पादेन सकृत् भूमिं प्रहृत्य आकाशमार्गेण उड्डयनम् आरब्धवान् ।

आञ्जनेयः यदा आकाशमार्गेण गच्छन् आसीत् तदा तस्य शक्तेः युक्तेः च परीक्षणाय देवाः सुरसां प्रेषितवन्तः ।

सुरसा घोरराक्षसीरूपं धृत्वा हनूमतः पुरतः स्वस्य मुखं व्यादाय अतिष्ठत् । हनूमान् स्वस्य आकारं वर्धितवान् । सुरसा मुखम् इतोऽपि विशालं कृत्वा हनूमतः गिलनाय प्रयासं कृतवती । किन्तु तावता हनूमान् अतिलघ्वाकारम् आश्रित्य सुरसायाः मुखं प्रविश्य तस्याः उदरं प्राप्य स्वस्य आकरं वर्धितवान् । तस्याः उदरं विभिद्य सः बहिः आगतवान् । देवाः तस्य बुद्धिमत्तां शक्तिं च बहुधा प्रशंसितवन्तः ।

हनूमान् यदा अग्रे गतवान् तदा राहोः माता सिंहिका नाम जलराक्षसी तस्य छायां गृहीत्वा तद्बलेन तम् अधः आकृष्टवती । राक्षस्याः एषः दुराचारः आञ्जनेयेन ज्ञातः । सः मुष्टिप्रहारादिभिः तां मारयित्वा अग्रे प्रस्थितवान् ।

अत्रान्तरे सुवर्चला नाम सागरकन्या मत्स्यरूपेण तिष्ठन्ती महता आश्चर्येण हनूमतः उड्डयनम् एव पश्यन्ती स्थितवती । तावता हनूमतः शरीरात् निर्गतः कश्चन स्वेदबिन्दुः तस्याः मुखे पतितः । तं सा गीर्णवती । तस्मात् सा गर्भवती जाता । गच्छता कालेन सा मत्स्यवल्लभनामकं पुत्रं प्राप्तवती ।

पूर्वं कदाचित् इन्द्रः सर्वेषां पर्वतानां पक्षौ कर्तितवान् आसीत् । तदवसरे हिमवतः पुत्रः मैनाकः समुद्रस्य आश्रयं प्राप्य समुद्रे निलीय तिष्ठन् पक्षच्छेदात् आत्मानं रक्षितवान् आसीत् ।

सः आकाशमार्गेण गच्छन्तं हनूमन्तं दृष्ट्वा जलस्तरात् उपरि आगत्य निवेदितवान् – "हनूमन् ! मयि किञ्चित् स्थित्वा विश्रान्तिम् अनुभूय श्रमं परिहरतु कृपया" इति ।

मैनाकस्य प्रार्थनां निराकर्तुम् अनिच्छन् हनूमान् तदुपरि क्षणकालमात्रं पादौ स्थापयित्वा

अनन्तरक्षणे एव ततः प्रस्थितवान् । अचिरात् एव लङ्का प्राप्ता तेन ।

लङ्कानगरस्य रक्षिका देवता लङ्किणी हनूमतः आगमनं ज्ञात्वा महता क्रोधेन त्रिशूलं गृहीत्वा हनूमतः मारणाय अग्रे आगता ।

तदा हनूमान् अल्पं रूपं प्राप्य लङ्कां प्रवेष्टुम् उद्युक्तः । लङ्किणी मक्षिकाम् इव हनूमन्तं गृहीत्वा मारयितुं प्रयासं कृतवती । तदा हनूमान् तस्याः हस्तं दन्तैः दष्टवान् । तेन तस्याः ग्रहणं शिथिलं जातम् । तस्याः हस्ततः रक्तधारा निर्गता । तस्याः हस्ततः मोक्षं प्राप्तवान् हनूमान् मुष्ट्या ताम् उरसि बलात् प्रहृतवान् । तेन शिरोभ्रमणं प्राप्य लङ्किणी अधः पतितवती ।

किञ्चित्कालानन्तरं सचेतना सा हनूमन्तम् उक्तवती – "आञ्जनेय ! पूर्वं कदाचित् ब्रह्मा माम् उक्तवान् आसीत् यत् यदा कश्चन वानरः भवतीं मूर्च्छितां करिष्यति तदा लङ्कायाः पतनस्य आरम्भः भविष्यति इति । इदानीम् अहम् इतः गच्छन्ती अस्मि । भवान् सुखेन लङ्कां प्रवेष्टुम् अर्हति" इति । ततः सा गन्धर्वनारीरूपं प्राप्य आकाशं प्रति उड्डीय अदृश्यतां गतवती ।

लङ्कां प्रविष्टवान् आञ्जनेयः मणिमयान् दीपान्, उन्नतानि भवनानि, लङ्कायाः सम्पत्तिं च दृष्ट्वा नितराम् आश्चर्यचकितः । सः सूक्ष्मं रूपं धृत्वा समग्रे लङ्कानगरे सीतायाः अन्वेषणम् अकरोत् । अन्तःपुरादिषु अपि तेन परिभ्रमणं कृतम् । प्रथमदर्शनेन मन्दोदरीम् एव सीतां भावितवान् सः । ततः विवेकपुरस्सरं विचिन्त्य एषा सीता न इति निश्चित्य सः अग्रे अगच्छत् ।

सीतायाः अन्वेषणं कुर्वन् सः अशोकवनं




प्रविष्टवान् । तत्र सः रामनामोच्चारणं दूरतः श्रुतवान् । कस्यचित् वृक्षस्य अधः निर्मिते मण्डपे उपविष्टा सीता राममेव ध्यायन्ती अश्रूणि स्रावयति स्म । तं मण्डपं परितः खड्गशूल-त्रिशूलादीनि आयुधानि धृतवत्यः घोराकाराः राक्षस्यः रक्षणकार्ये निरताः आसन् । मण्डप-समीपे स्थितस्य शिंशुपावृक्षस्य उपरि उपविश्य हनूमान् सीताम् एव निरीक्षमाणः आसीत् ।

सीता मण्डपात् निर्गत्य अशोकवृक्षस्य अधः उपविष्टवती । तस्मिन् एव समये महता दर्पेण रावणः तत्र उपस्थितः । तस्य पृष्ठतः स्थिताः देव-नाग-यक्ष-राक्षसकुलीयाः स्त्रियः विविधैः प्रकारैः यशोगानं कुर्वन्ति स्म ।

रावणः अशोकवृक्षसमीपं गत्वा अवदत् – "सीते ! किमर्थम् इतोऽपि तस्मिन् क्षुद्रे रामे अनुरागः भवत्याः ? सः लङ्कां प्राप्तुं तु



कथमपि न शक्नोति'' इति ।

तदा सीता स्वस्य पुरतः एकं तृणं संस्थाप्य उक्तवती - ''हे रावण ! भवान् नीचः दुष्टः च । भवादृशस्य दण्डनं धर्मपालकस्य श्री-रामस्य कर्तव्यम् एव । व्यर्थप्रलपनं स्थगयतु । मरणात् पूर्वं का का इच्छा पूरणीया इति निश्चित्य तासां पूरणे मतिं करोतु । भवतः अन्तिमानि दिनानि सन्निहितानि सन्ति'' इति ।

एतत् श्रुत्वा महान्तं क्रोधं प्राप्तवान् रावणः - ''भवतीम् इदानीं खण्डशः कर्तयिष्यामि'' इति वदन् खड्गम् उन्नीतवान् ।

''मां स्प्रष्टुम् अपि सामर्थ्यं नास्ति भवतः । धिक् भवन्तम् । सामोपायेन दण्डभीतिदर्शनेन वा भवान् मां कदापि वशीकर्तुं न अर्हति'' इति अवदत् सीता ।

''मम भगिन्याः यत् अपमाननं कृतं तस्य प्रतीकाररूपेण भवतीं वशीकरिष्यामि एव । एषः मम दृढनिश्चयः'' इति अवदत् रावणः ।

''रामं युद्धे पराजित्य यदि भवता अहम् आनीता स्यां तर्हि भवतः पौरुषं प्रशंसार्हम् अभविष्यत् । किन्तु भीरुः भवान् वञ्चना-मार्गेण माम् अपहृत्य आनीतवान् । एतादृशस्य भवतः वध एव न्याय्यः'' इति अवदत् सीता ।

सीतायाः वचनं श्रुत्वा महान्तं क्रोधं प्राप्य अपि किमपि कर्तुम् अशक्नुवन् रावणः तां निन्दन् एव ततः प्रतिगतवान् । यदा रक्षण-कार्यनिरताः राक्षस्यः अशोकवनिकातः दूरं गताः तदा हनूमान् वृक्षात् अवतीर्य रामेण दत्तम् अङ्गुलीयकं सीतायै दत्तवान् । स्वस्य विश्वरूपं दर्शयित्वा सः उक्तवान् यत् भवती यदि मम स्कन्धे उपविशेत् तर्हि क्षणाभ्यन्तरे अहं भवतीं रामसमीपं नयेयम् इति ।

''एतत् पातिव्रत्यधर्मविरुद्धं भवति । रामः एव अत्र आगत्य रावणं संहृत्य मां यदि नयेत् तर्हि वरं भवेत् । अतः रामः एव अत्र आगच्छतु'' इति उक्त्वा आत्मना धृतं चूडा-मणिम् अपनीय आञ्जनेयाय दत्त्वा - ''एतत् रामाय ददातु'' इति अवदत् ।

आत्मना लङ्का प्रविष्टा यत् तस्य ज्ञापनाय हनूमान् अशोकवनं पूर्णतः ध्वस्तं कृतवान् । एतत् दृष्ट्वा क्रुद्धाः अक्षयजम्बुमालिप्रभृतयः तस्य ग्रहणाय आगताः । हनूमान् तान् सर्वान् लीलया संहृतवान् ।

रावणस्य ज्येष्ठः पुत्रः इन्द्रजित् ब्रह्मास्त्रस्य प्रयोगं कृतवान् । ब्रह्मणि आदरदर्शनाय हनूमान् क्षणकालं यावत् अस्त्राधीनः जातः । 'रावणः योग्येन क्रमेण बोधनीयः' इति विचिन्त्य सः

बन्धनम् अपि अङ्गीकृतवान् ।

रावणः उन्नते सिंहासने उपविष्टः आसीत् । सः लोहपट्टिकाभिः बद्धम् आञ्जनेयम् उपेक्षया दर्पेण उपहासमिश्रितदृष्ट्या च अपश्यत् ।

एतत् असहमानः आञ्जनेयः लोहशृङ्खलाः भञ्जयित्वा रावणस्य आसनात् अपि उन्नततया स्वस्य पुच्छं वलयीकृत्य आसनं रचयित्वा तदुपरि उपविश्य रावणम् अवदत् - ''हे राक्षसराज रावण ! अहं श्रीरामस्य दूतः अस्मि । श्रीरामः महत्या वानरसेनया सह आगत्य भवतः लङ्कां लीलया वशीकर्तुम् अर्हति । स्वस्य बलस्य पराक्रमस्य च विषये महान् गर्वः स्यात् भवतः । किन्तु एतदत्र भवता स्मर्तव्यं यत् शक्तिशाली अपि कश्चन सर्पः सामान्याभिः पिपीलिकाभिः मार्यते कदाचित् इति । यदि भवान् स्वस्य मङ्गलम् इच्छेत् तर्हि सीतां रामाय प्रत्यर्प्य क्षमां याचतु'' इति ।

हनूमतः वचनं श्रुत्वा महान्तं क्रोधं प्राप्तवान् रावणः तस्य संहाराय खड्गम् आकृष्टवान् । तदा विभीषणः तं बोधितवान् - ''भ्रातः ! दूतस्य संहारः राजधर्मविरुद्धः । दूतसंहारः न पौरुषद्योतकः'' इति ।

''भवतु नाम । एतं न संहरिष्यामि अहम् । एतस्य पुच्छं वस्त्रेण आवरय्य, तत् वस्त्रं तैलेन आर्द्रीकृत्य पुच्छे अग्निं योजयन्तु'' इति आदिशत् रावणः ।

राक्षसाः हनूमतः पुच्छं वस्त्रेण आवरयितुम् प्रयत्नम् आरब्धवन्तः । यथा यथा तैः वस्त्र-बन्धनं कृतं तथा हनूमतः पुच्छं प्रवृद्धम् । तैः आनीतं तैलं वस्त्रस्य आर्द्रीकरणाय अपर्याप्तं जातम् । अन्ते राक्षसाः हनूमतः पुच्छे अग्निं योजितवन्तः । हनूमान् स्वस्य शरीरं वर्धयित्वा



इतस्ततः कूर्दनम् आरब्धवान् ।

सः समग्रायां लङ्कानगर्यां सञ्चारं कुर्वन् सर्वेषु भवनेषु अग्निं योजितवान् । रावणस्य अन्तःपुरम् अपि अग्निसात् जातम् । असंख्यानि भवनानि दग्धानि जातानि । असंख्याः राक्षसाः मरणं प्राप्तवन्तः । विभीषणभवनमात्रम् अग्निना अस्पृष्टम् आसीत् ।

अशोकवने सीता सकुशला अस्ति इति अंशं दृढीकृत्य हनूमान् समुद्रतीरं प्राप्य जले पुच्छं मज्जयित्वा अग्निं निवार्य चूडामणिना सह श्रीरामस्य दर्शनाय समुद्रस्य अपरं तीरं प्राप्तवान् ।

चूडमणिदर्शनमात्रेण एव रामः सीतादर्शनं प्राप्तवान् इव तृप्तिम् अनुभूतवान् । सः तं मणिं वक्षसि आरोपितवान् । हनूमान् श्रीरामं लङ्कादहनवृत्तान्तं समग्रतया श्रावितवान् ।

रामः हनूमन्तं दृढतया आलिङ्ग्य अवदत् – ''सीतायाः अन्वेषणमात्रं मया सूचितम् आसीत् । भवान् तु लङ्कापुरीं दग्ध्वा अस्मत्-पक्षस्य सामर्थ्यं परिचाय्य एव आगतवान् । भवादृशे वीरे सति किमपि कार्यम् असम्भवं नास्ति । भवान् मम सीतायाः च मध्ये सन्धानं कृत्वा मयि महान्तम् आनन्दम् उत्पादितवान् । ज्ञानी शूरः च अस्ति भवान्'' इति ।

सीतायाः सङ्कल्पस्य अनुसारं रामचन्द्रः कोदण्डं गृहीत्वा रावणसंहारं सङ्कल्पितवान् ।

विभीषणः रावणस्य विमातृपुत्रः । सः रावणम् उक्तवान् यत् रामचन्द्रस्य विरोधः न उचितः, अतः सीतां तस्मै समर्प्य लङ्कायाः रक्षणं वरम् इति ।

''भवतः दुराग्रहमूर्खतयोः कारणतः समग्रं राक्षसकुलं विनष्टं न स्यात् । एतद्विषये अवधानदानम् उचितम्'' इत्यपि बोधितवान् सः ।

एतत् श्रुत्वा रावणः नितरां क्रुद्धः । सः क्रोधेन अगर्जत् – ''अये भीरो ! प्रमादवशात् भवान् राक्षसकुले जन्म प्राप्तवान् अस्ति । शूर्पणखायाः अपमाननं राक्षसकुलस्य एव अपमाननम् । प्रतीकारसाधनम् अस्माकं कुलधर्मः । एतत् अनुचितं वदन् भवान् एव राक्षसकुलाङ्गारः अस्ति । किं भवतः अत्र वासेन ? अद्यैव इतः निर्गच्छतु भवान् । अन्यथा अहं भवन्तं चूर्णीकरिष्यामि'' इति ।

एतस्मात् नितरां खिन्नः विभीषणः अनुचरैः सह लङ्कां परित्यज्य गतवान् ।



# वाणिज्ये स्पर्धा

राधेशः भूषणश्च प्रमुखौ वणिजौ । प्रबलयोः तयोः वाणिज्यविषये महती स्पर्धा आसीत् ।

कदाचित् कश्चन तरुणः भूषणसमीपम् आगतः । कार्ये मग्नः भूषणः किञ्चित्समयानन्तरं तं तरुणं दृष्ट्वा पृष्टवान् – ''भवान् कः ? किमर्थम् अत्र आगतम् ?'' इति ।

तदा सः तरुणः – ''महोदय ! मम नाम श्रीनिवासः इति । राधेशस्य सेवकः सन् कार्यं करोमि स्म । राधेशेन दीयमानं वेतनं न्यूनमिति तत्र कार्यं त्यक्तवान् अस्मि । भवतः कार्यालये कार्यं लभ्येत इति मत्वा अत्र आगतं मया'' इति उक्तवान् ।

''अत्रापि वेतनं न्यूनम् इति भावः यदा उत्पत्स्यते तदा अधिकं वेतनं याचेत एव खलु भवान् ?'' इति पृष्टवान् भूषणः ।

तदा सः तरुणः – ''वेतनं यदा अपर्याप्तं भवति तदा अधिकं वेतनं प्रार्थ्यते चेत् को दोषः ?'' इति सविनयं पृष्टवान् ।

''अस्तु ! यदि भवते अहम् उद्योगं दास्यामि तर्हि मम को लाभः ?'' इति पृष्टवान् भूषणः ।

''भवतः कथनस्य अभिप्रायः मया न ज्ञातः'' इति उक्तवान् श्रीनिवासः ।

''मम अभिप्रायः एषः यत् राधेशेन वाणिज्ये औन्नत्यं प्राप्तुं कीदृशः मार्गः आश्रीयते इति किं भवान् वक्तुं शक्नुयात् ?'' इति पृष्टवान् भूषणः ।

तदा श्रीनिवासः उक्तवान् – ''क्षम्यताम् । यदि अहं तं विषयं भवन्तं वदेयं तर्हि भवान् मह्यम् उद्योगं न दास्यति'' इति ।

''एवं किमर्थं चिन्तयति भवान् ?'' इति पृष्टवान् भूषणः ।

''यदि अहं वदेयं तर्हि भवान् चिन्तयेत् यत् एषः अत्रत्यं विषयं तत्र न वदति इत्यत्र को विश्वासः इति'' इति उक्तवान् श्रीनिवासः ।

तस्य कथनं श्रुत्वा भूषणः उच्चैः हसन् उक्तवान् – ''भोः, भवता दत्तम् उत्तरमेव भवतः बुद्धिमत्तां निष्ठां च सूचयति । मम राधेशस्य च मध्ये वाणिज्यविषयमात्रे स्पर्धा अस्ति, न तु कर्मकराणां विषये । आगच्छतु, स्वीकरोतु एतानि गणनापुस्तकानि । इदानीमेव कार्यारम्भं करोतु'' इति ।






# पेटिकासु प्राप्ताः मुद्राः

पराशरः कश्चन धनिकः । तस्य पूर्वजाः अपि धनिकाः एव । अतः दारिद्र्यस्य अनुभवः तस्य नास्ति एव । सोऽपि नौकया विदेशवाणिज्यं, कुसीदवाणिज्यं च कुर्वन् प्रभूतं धनं सम्पादितवान् आसीत् । अतः तस्य तावती सम्पत्तिः आसीत् यत् तस्य पुत्राः पौत्राः चापि यदि विना श्रमं जीवेयुः तर्हि अपि सुखमयं जीवनं यापयितुं शक्नुयुः । स्वेन आर्जितं धनं सः पराशरः त्रिधा विभज्य पेटिकासु पूरयित्वा भूमौ स्थापितवान् ।

एकस्यां सुवर्णमुद्राः, द्वितीयायां रजतमुद्राः, तृतीयायां कांस्यमुद्राः च पूरिताः आसन् तेन । मुद्राः सुरक्षिताः सन्ति वा इति पुनः पुनः पश्यन् सन्तोषम् अनुभवति स्म सः ।

अथ कदाचित् प्रतिवेशिराजः एतं देशम् आक्रान्तवान् । सः महापराक्रमी आसीत् । अपि च सः युद्धे कदापि पराजयमेव न प्राप्त-वान् आसीत् । जनाः तं निर्दिशन्ति स्म 'अजेयः राजा' इति । शत्रुराजस्य आगमन-वार्तां श्रुत्वा नितरां भीतः पराशरः 'एतस्मात् प्रदेशात् पलायनमेव वरम्' इति चिन्तितवान् । किन्तु स्वेन रक्षितस्य धनस्य नयनं कष्टमिति विचिन्त्य सः तिसृषु पेटिकासु स्थितस्य धनस्य उपरि सिक्थकं प्रसार्य ताः पेटिकाः वस्त्रेण आच्छादितवान् । त्वराकारणात् पेटिकाः न कीलिताः तेन । ततः सः सपरिवारं देशान्तरं गतः ।

केषुचित् एव दिनेषु शत्रुराजः धनिकस्य नगरम् अपि स्वाधीनं कृतवान् । तस्य दृष्टिः आदौ धनिकस्य गृहे एव संलग्ना । धनिकस्य सम्पत्तिं सैन्यद्वारा स्वाधीनीकृतवान् सः । ततः सः पराशरेण भूमौ स्थापिताः पेटिकाः दृष्ट-वान् । सेनाधिपतिः ताः पेटिकाः परिशील्य – ''एताः पेटिकाः सिक्थकेन पूर्णाः । अतः एव गृहस्वामी एताः त्यक्त्वा गतः अस्ति । कोऽपि एतासां क्रेता अस्ति चेत् विक्रयणं कुर्वन्तु'' इति सैनिकान् आज्ञापितवान् ।

सैनिकाः ताः विक्रेतुं प्रयासं कृतवन्तः ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

किन्तु तेषां प्रयत्नः सफलः न जातः । यतः कोऽपि ताः क्रेतुं न आगतः एव । एवमेव कानिचन दिनानि गतनि ।

कदाचित् कश्चन दरिद्रः सैनिकानां समीपम् आगत्य उक्तवान् – "अहं सिक्थवर्तिकाः निर्माय विक्रयणं करोमि । एषः एव मम उद्योगः । अतः एतत् सिक्थकं मह्यं न्यून-मूल्येन यच्छन्तु" इति ।

शत्रुसैनिकाः एतत् श्रुत्वा झटिति दरिद्रात् धनं स्वीकृत्य उक्तवन्तः – "एतासां रक्षणात् वयं श्रान्ताः । शीघ्रं भवान् एताः इतः नयतु" इति ।

दरिद्रः ताः पेटिकाः महता प्रयासेन गृहम् आनीतवान् । 'शत्रूणां गमनानन्तरं देशे परिस्थितिः किञ्चित् समीचीना भवेत् । ततः अहम् अत्रत्येन सिक्थकेन सिक्थवर्तिकाः करिष्यामि' इति चिन्तितवान् सः कस्याञ्चित् पेटिकायां हस्तं स्थापितवान् । किमपि वस्तु हस्ते संलग्नमिव । कुतूहलेन सः सिक्थकं किञ्चित् अपसार्य दृष्टवान् । 'सिक्थकस्य अधः सुवर्णमुद्राः दृष्टाः तेन । आश्चर्यं प्राप्तवान् सः सावधानं सर्वं परिशीलितवान् । सिक्थकस्य अधस्तात् सुवर्णमुद्राः प्रभूततया प्राप्ताः ।

दरिद्रः अन्याः पेटिकाः अपि परिशीलित-वान् । तयोः रजतमुद्राः, कांस्यमुद्राः च आसन् । एतत् सर्वं पश्यतः तस्य मनः आनन्देन आश्चर्येण च पूर्णम् । यस्मिन् प्रकोष्ठे ताः धनपेटिकाः स्थापिताः तस्य प्रकोष्ठस्य रक्षणं योग्यरीत्या कृतवान् सः । इदानीं तस्य दारिद्र्यं वस्तुतः नास्ति । तथापि, झटिति धनिकता दर्शिता चेत् अन्ये सन्देहं प्राप्नुयुः इति चिन्तयन् सः यथापूर्वं सरलजीवनम् एव अकरोत् ।

कानिचन दिनानि गतानि । 'अस्य धनस्य व्ययः कदा मया कर्तुं शक्येत ? भूस्वामी इव यदि अहं वैभवोपेतं जीवनं यापयिष्यामि तर्हि सर्वे मयि संशयं प्रकटयेयुः । ततः मम कष्टं



भवेत्' इति चिन्तयन् सः धनव्ययमार्गं बहुधा अचिन्तयत् । तथापि कोऽपि मार्गः न स्फुरितः ।

एकस्मिन् दिने सः मित्रस्य सौचिकस्य समीपं गत्वा एकं युतकं सीवितवान् । तदर्थं तस्मै मुष्टिपरिमिताः स्वर्णमुद्राः दत्तवान् ।

स्वर्णमुद्राः दृष्ट्वा आश्चर्यचकितः सौचिकः उक्तवान् – ''हन्त ! एतावतीः स्वर्णमुद्राः अहं स्वीकर्तुं न इच्छामि । मम परिश्रमानुगुणं धनं ददातु भवान् । तावता अलम्'' इति ।

''मम समीपे पेटिकापूर्णं स्वर्णमुद्राः सन्ति । भवान् मम सुहृत् एव । मित्राय धनस्य दानं, ततः स्वीकरणं च न पापाय । भवतः अपि धनस्य आवश्यकता अस्ति । एताः स्वर्णमुद्राः स्वीकरोतु । धनविषये तिरस्कारः मास्तु'' इति उक्तवान् सः सिक्थवर्तिकावणिक् ।

तस्य वचसि सौचिकस्य विश्वासः न उत्पन्नः । सः चिन्तितवान् यत् अत्र किमपि रहस्यम् अस्ति इति । अतः सः तं पृष्टवान् – ''अकस्मात् कथम् एतावत् धनं भवता प्राप्तम् ? अत्र कापि वञ्चना नास्ति किल ?'' इति ।

''आगच्छतु मया सह । प्रदर्शयामि सर्वम्'' इति वदन् सिक्थवर्तिकावणिक् तं सौचिकं गृहं नीतवान् । तत्र शत्रुसैनिकेभ्यः क्रीताः पेटिकाः प्रदर्श्य तासां प्राप्तिवार्तां सविस्तरम् उक्तवान् । पेटिकासु स्थिताः स्वर्ण-रजत-कांस्यमुद्राः प्रदर्श्य पृष्टवान् च – ''एतत् सर्वम् अहं कथं व्ययीकरिष्यामि ? अत्रत्यस्य अर्धभागं भवान् स्वीकरोतु'' इति ।

सौचिकः मुष्टिपरिमिताः स्वर्णमुद्राः स्वीकृत्य तम् उक्तवान् – ''जीवनं सुखमयं भवितुं मम एतावत् धनं पर्याप्तम् । भवान् अपि मम सूचनां श्रद्धया शृणोतु । सहस्रं वर्षाणि यावत् व्ययः करिष्यते चेदपि एतत् धनं समाप्तं न भवेत् । एतत् धनं पश्यन् भवान् सुखेन न जीवेत् अपि । अतः यत् धनम् अत्र अस्ति तत् दरिद्रेभ्यः वितरतु । तेन दरिद्राः सुखेन जीवन्तु नाम'' इति ।

सौचिकस्य सूचना समीचीना इति चिन्तितवान् सः दरिद्रः । अतः सः स्वस्मिन् स्थिताः मुद्राः दरिद्रेभ्यः वितीर्य तेषां सुखमयजीवनस्य कारणं जातः । अन्येषां संशयः यथा न भवेत् तथा जागरूकः सन् धनं वितीर्य सः अवशिष्टम् अल्पमात्रं धनम् उपयुञ्जानः सुखेन जीवितवान् ।



# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

शान्तिदेवस्य दिवङ्गतेः अनन्तरं वसन्तस्य आर्यस्य च स्नेहः दिने दिने वर्धते । वीरसिंहः विद्रोहिणां ग्रहणाय स्वयम् एव कार्यप्रवृत्तः भवति । सः मृगयाव्याजेन सैनिकैः सह अरण्यं गच्छति । विरसिंहस्य सैनिकाः वृद्धां भल्लूकीं गृह्णन्ति । तावता कश्चन ध्वनिः श्रूयते - 'अलं साहसेन' इति ।

चित्रम् - गान्धि-अय्यः



















अपरस्य वीरसिंह ।
आगमनात् बाणस्य
एव यदि पूर्वम्
युध्येत तर्हि भल्लूकी
सजीवं तिष्ठेत् । भवान्
त्वरया इतः
निर्गम्यताम् ।
वीरसिंहः एतं सन्देशं पठित्वा क्रोधसन्तप्तः भवति ।
विकत्थकः कोऽपि ! यः बाणप्रयोगं कृतवान् सः समीपे कुत्रचित् स्यात् । अन्विष्यताम् ।
सैनिकाः सर्वत्र अन्वेषणं कुर्वन्ति । किन्तु धनुर्बाणहस्तः कोऽपि तैः न प्राप्यते ।
अकस्मात् सर्वासु दिक्षु चीत्कारस्य ध्वनिः श्रूयते ।
अहो, मदीयानाम् एव चीत्कारः एषः ।


रक्ष्यताम्, रक्ष्यताम् ।
हा हन्त !
अरण्यस्य सर्वे जीविनः हठात् आक्रमणं कुर्वन्ति । एतत् दृष्ट्वा वीरसिंहजनाः आश्चर्यचकिताः भवन्ति ।
भल्लूकः मां मारयति । रक्ष्यताम् ।


महाराज ! इतः त्वरया निर्गमनम् एव वरम् ।
भवतु, वयं प्रासादं प्रतिनिवर्तामहे ।
तावता कश्चन कपिः वीरसिंहस्य उपरि अभिपतति ।
हन्तः ! कश्चन वानरः !
मम उष्णीषः गतः ।
मम अश्वः क्व गतः ?

वीरसिंहः ततः धावति । सः एकाकी जातः अस्ति । कश्चन व्याघ्रः तम् अनुसरति ।

जगत्सिंहस्य अश्वः अपि न दृश्यते !

वीरसिंहः भूमौ पतति । व्याघ्रः तदुपरि आक्रमणं करोति ।

तावता कश्चन ध्वनिः श्रूयते ।

व्याघ्र ! अलम् एतावता । प्रतिनिवर्तनाय आर्यः आज्ञापितवान् अस्ति ।

वीरसिंहः उत्थिष्ठति । प्राणिनां प्रतिगमनाय केन आज्ञा दत्ता इति पश्यति सः परिवृत्य ।

सः कथम् आज्ञया प्राणिनः प्रवर्तयति निगृह्णाति च ? आश्चर्याय एतत् !

आर्यः ! एषः कः स्यात् ?

वीरसिंहः महतीं लज्जाम् अनुभवति ।

अहम् आस्थाने मम मुखं कथं दर्शयेयम् ?

वीरसिंहः सेनापतिना जगत्सिंहेन अन्यैः दलपतिभिश्च सह मन्त्रालोचनं करोति ।

आम् महाराज !

विद्रोहिणः कुत्रापि न दृश्यन्ते इति कथ्यते वा भवता ?

महाराज ! ते भवतः निरन्तर-कार्याचरणात् भीताः सन्तः पलायितवन्तः सन्ति ।

द्वित्राणि वर्षाणि न कापि चिन्ता अस्माकम् ।

जयानन्दवर्येण प्रेषिता शुकी आगच्छन्ती अस्ति । प्रायः मुनिवर्यः आगच्छन् अस्ति ।

जयनगरस्य दलपतिः सुखदेवः जयानन्दस्य स्वागताय सज्जः भवति ।

स तु द्वारि उपस्थितः एव ! मया तस्य स्वागताय गन्तव्यम् ।

व्याघ्र ! अत्रैव तिष्ठतु भवान् ।

महात्मन् ! प्रणामाञ्जलिः समर्प्यते मया !

भवता मेलनाय आगतम् अस्ति मया ।

राजकुमारः अपि कुशली ?

आर्यः सकुशलः । काचित् विलक्षणा वार्ता आनीता अस्ति मया ।

अनुवर्तते

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थं विज्ञानम्



### लवणं किमर्थम् उपयुज्यते अस्माभिः ?

अल्पम् अपि लवणम् अस्माकम् आहारे महतीं रुचिं कल्पयति इति वयं जानीमः एव । लवणरहितः पाकः प्रायः कस्मैचिदपि न रोचते । लवणं संरक्षणसाधनम् अपि ।

माधुर्यं लवणांशः च रुचिषु प्रमुखे ! अतः एव सर्वैः अपि मानवैः एते रुची सदा इष्येते ।

समुद्रतः महता प्रमाणेन लवणोत्पादनम् ऐदम्प्राथम्येन कृतवन्तः तु चीनजनाः एव । समुद्रलवणं सैन्धवलवणात् स्वरूपेण भिद्यते ।

मानवशरीरे ४औन्स्परिमितः लवणांशः भवति । यदि शरीरे लवणांशः न स्यात् तर्हि स्नायवः बलं न प्राप्नुयुः, रक्तपरिचलनं सम्यक् न भवेत्, आहारः सुजीर्णः न स्यात्, हृदयम् अपि न स्पन्देत । शरीराय कियान् लवणांशः अत्यावश्यकः, किं परिमाणम् आधिक्यं द्योतयति इति वैद्याः एतावता अपि वक्तुं न शक्तवन्तः । अतः लवणं तु अवश्यं सेवनीयं, किन्तु अधिकं न भवेत् तत् सेवनम् ।

## भवतां परिसरः

### शाकमयः अल्पाहारः

अल्पाहारः यद्यपि नाम्ना अल्पः, तथापि तस्य महत्त्वं तु अनल्पम् । उत्कृष्टस्य अल्पाहारस्य सेवनम् उत्कृष्टम् एव फलं दातुम् अर्हति । नैसर्गिकाहारसदृशः प्रशस्तः आहारः नास्ति अन्यः लोके । प्रपञ्चे बहूनां जनानाम् अल्पाहारे ब्रेड्, नवनीतं, सलामी, क्षीरं च भवति । नैसर्गिकाहारः एतत्सदृशः एव प्राप्तुं शक्यः इति किं भवन्तः जानन्ति ?

दक्षिणेशियादेशे आर्टोकार्पस्नामकः कश्चन वृक्षः अस्ति । तस्य नामान्तरम् अस्ति 'ब्रेड्वृक्षः' इत्येव । एषः वृक्षः मलबरीवृक्षजातीयः एव । एतस्य फलं ब्रेड्गन्धोपेतम् एव भवति । अधिक-प्रमाणेन 'स्टार्च्' अपि भवति अत्र ।

आफ्रिकादेशे नवनीतवृक्षः कश्चन अस्ति । एतस्य निष्पावाकारकं फलं भवति । क्वथनादिना नवनीतसदृशं किञ्चन प्राप्तुं शक्यते एतस्मात् ।

आफ्रिकादेशे सलामीवृक्षसदृशः वृक्षः कश्चन अस्ति । तस्य फलं सलामीफलसदृशम् एव ।

वर्जीनियादेशे क्षीरवृक्षः दृश्यते । माधुर्ययुक्तः एतस्मात् निर्गच्छन् रसः 'क्षीर'सदृशः एव भवति ।



# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### हस्ताक्षराणि भवन्ति व्यक्तित्वज्ञापकानि

हस्ताक्षराणि परिशील्य तस्य लेखकस्य व्यक्तित्वादिकं वक्तुं शक्यते इति जानान्ति किं भवन्तः ? हस्ताक्षराध्ययनस्य एतस्य 'ग्राफोलजी' इति नाम । एतत् शास्त्रं विज्ञानशाखात्वेन परिगणितम् अस्ति । अक्षरस्य आकारः, पङ्क्तिदिक्, बलप्रयोगः इत्यादीन् अंशान् परिशील्य तल्लेखितुः व्यक्तित्वम् अवगम्यते विज्ञैः । हस्ताक्षरस्य सम्यक् परिशीलनं कृत्वा



व्यक्तेः स्वभावादीनाम् अभिज्ञानाय विशेषाध्यनं करणीयं भवति ।

अत्र केचन प्राथमिकाः सरलाः अंशाः उल्लिख्यन्ते । यैः लिखितानि अक्षराणि बृहदाकारकाणि भवन्ति ते अभिमानधनाः जनसम्पर्कशीलाः च भवन्ति । येषाम् अक्षराणि मध्यमाकारकाणि भवन्ति तेषाम् आत्मनिग्रहणसामर्थ्यम् अत्यधिकम् । लघ्वक्षराणि अस्पष्टाक्षराणि च ये लिखन्ति ते सदा चिन्तयन्ति यत् जनाः माम् अभिजानीयुः इति ।

## अभिवर्ध्यतां ज्ञानशक्तिः

अस्माकं देशे विविधमतानि सन्ति । तेषाम् अनुयायिनः अपि अनल्पाः । एतस्य मासस्य प्रश्नाः एतानि मतानि अवलम्ब्य सन्ति ।



१. भारते स्थितं पवित्रतमं बौद्धस्थानं किम् ?

२. झरोष्ट्रियन्जनाः स्वस्य पूजास्थानं केन नाम्ना निर्दिशन्ति ?



३. कः सिक्खगुरुः 'खालसापन्थ'नामकं सैन्यगणं रचितवान् ?



४. जैनमतस्य उभे विभागे के ?



५. मुस्लिम्दिनदर्शिका कस्मिन् वर्षे आरब्धा ?

*(उत्तराणि ७० तमे पृष्ठे)*

# चित्रशीर्षिकास्पर्धा

अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



NARAYANAMURTY TATA



NARAYANA MURTY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





**'नवम्बर्'मासस्य चित्रशीर्षिकाप्रेषकः -**

**गोपालकृष्णः**

कुन्निनाथ परम्बिल् हौस्, कनायम् (पो)

शोरनूरु, पालघाट (जि॰)

**केरलम् - ६७९ १२५**

**कार्यावलोकने पूर्णकौशलम्**

**क्रीडनके कुतूहलमात्रम्**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. सारनाथः ।

२. अंशुमन् । (अग्निदेवालयः) ।

३. गोविन्दसिंहः । (दशमः गुरुः) ।

४. दिगम्बराः श्वेताम्बराः चेति ।

५. ६२२ तमे क्रिस्ताब्दे ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

CHANDAMAMA (Sanskrit) JANUARY 2005
Regd. No. TN/PMG(CCR)-589/03-05
Regd. with Registrar of Newspaper for India No. 42664/85
Licensed to post without prepayment No. 371/03-05 Foreign - WPP. No. 372/03-05



# वायुप्रदूषणस्य निवारणम्

दिनद्वयतः कक्ष्यां प्रति श्रेयस्याः अनागमनं दृष्ट्वा वीणा चिन्ताक्रान्ता जाता । सा सायं श्रेयस्याः गृहं प्रति दूरवाणीं कृतवती । तदा तस्य गृहस्य सेविका उक्तवती – ''श्रेयसी अस्वस्था अस्ति । अतः सा वैद्यालयं प्रति नीता अस्ति'' इति ।



'सामान्यं कारणं निमित्तीकृत्य श्रेयसी कक्ष्यायाम् अनुपस्थिता न भवति' इति जानती वीणा श्रेयस्याः गृहम् एव गतवती अनन्तरदिने । श्रेयसी शय्याम् आश्रितवती आसीत् । कान्तिहीनमुखा दुर्बला च दृश्यते स्म सा ।

''आर्ये ! श्रेयस्याः किं जातम् ?'' इति श्रेयस्याः मातरं पृष्टवती वीणा ।

''सा श्वाससम्बन्धिरोगेण पीडिता अस्ति । वैद्यः वदति यत् इन्धनतैलयन्त्रागारादीनां धूमस्य कारणतः एतत् अस्वास्थ्यम् आरब्धम् इति । सप्ताहं यावत् औषधं सेवनीयं, विश्रान्तिश्च भवेत् इति वैद्यः कथयति'' इति अवदत् श्रेयस्याः माता ।

अनन्तरदिने वीणा स्वस्य कक्ष्यायां श्रेयस्याः अस्वास्थ्यवार्ताम् अध्यापिकाम् उक्तवती । सर्वं श्रुत्वा अध्यापिका कक्ष्याम् उद्दिश्य उक्तवती – ''आधुनिकजीवनस्य विषमयं फलं नाम परिसरमालिन्यम् । मानवजगते निसर्गेण दत्तम् अपूर्वम् उपायनं नाम स्वच्छः परिसरः । किन्तु वयं तमेव कलुषीकुर्वन्तः स्मः । श्रेयस्या यत् अस्वास्थ्यं प्राप्तं तत् परिसरमालिन्यस्य दुष्परिणामेषु अन्यतमम्'' इति ।

''परिसरमालिन्यस्य निवारणाय अस्माभिः किं करणीयम् आर्ये ?'' इति पृष्टवन्तः छात्राः ।

''किं कर्तुं शक्येत इति चिन्तयन्ति भवन्तः ?'' इति प्रतिप्रश्नं कृतवती अध्यापिका ।

छात्रैः एतदर्थं विविधाः मार्गाः उक्ताः । ''विद्यालयं प्रति कार्यानेन आगमनं परित्यज्य त्रिचक्रिकया आगमनं लाभाय स्यात्'' इति एकः, ''दीपावल्यादिषु अवसरेषु स्फोटकादीनां स्फोटस्य न्यूनीकरणात् परिसरमालिन्यं निवारितं स्यात्'' इति अपरः, ''परिसरविषये सर्वे जनाः बोधनीयाः'' इति अन्यः च अवदन् ।

''युक्तम् एतत् । यत्र यत्र शक्यते तत्र सर्वत्र वृक्षाणाम् आरोपणात् अपि लाभः स्यात् । वृक्षाः तु परिसरस्य स्वच्छतायाः रक्षणे नितराम् उपकारकाः'' इति अवदत् अध्यापिका ।

''एतत् वयम् अवश्यं करिष्यामः'' इति अवदन् छात्राः ।